PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**



Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

HEALTHY CHILD—NATION'S HOPE & PRIDE

Design courtesy : World Health Organisation

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | **'CHANDAMAMA BUILDINGS'**<br>**188, N.S.K. Salai**<br>**Vadapalani, Madras-600 026** |
| *2. Periodicity of Publication* | **MONTHLY**<br>**Ist of each calender month** |
| *3. Printer's Name* | **B.V. REDDI** |
| *Nationality* | **INDIAN** |
| *Address* | **Prasad Process Private Limited**<br>**188, N.S.K. Salai**<br>**Vadapalani, Madras-600 026** |
| *4. Publisher's Name* | **B.VISWANATHA REDDI** |
| *Nationality* | **INDIAN** |
| *Address* | **Chandamama Publications**<br>**188, N.S.K. Salai**<br>**Vadapalani, Madras-600 026** |
| *5. Editor's Name* | **B.NAGI REDDI** |
| *Nationality* | **INDIAN** |
| *Address* | **'Chandamama Buildings'**<br>**188, N.S.K. Salai**<br>**Vadapalani, Madras-600 026** |
| *6. Name and Address of individuals who own the paper* | **CHANDAMAMA PUBLICATIONS**<br>**PARTNERS:**<br>**1. Sri B. VENKATRAMA REDDY**<br>**2. Sri B.V. NARESH REDDY**<br>**3. Sri B.V. SANJAY REDDY**<br>**4. Sri B.V. SHARATH REDDY**<br>**5. Smt. B. PADMAVATHI**<br>**6. Sri B.N. RAJESH REDDY**<br>**7. Smt. B. VASUNDHARA**<br>**8. Kum. B.L. ARCHANA**<br>**9. Kum. B.L. ARADHANA**<br><br>**'Chandamama Buildings'**<br>**188, N.S.K. Salai**<br>**Vadapalani, Madras-600 026** |

**I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.**

**1st March 1995**

**B. VISWANATHA REDDI**
***Signature of the Publisher***

**Say "Hello" to text books and friends**
**'Cause School days are here again**
**Have a great year and all the best**
**From Wobbit, Coon and the rest!**








It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell u what you've learnt everyday, when you come home from school !




HANDAMAMA
OLLECTION



# चन्दमामा

मार्च् - १९९५

*

## अन्तरङ्गम्



*

प्रतिकृतिमूल्यं - रू. ५.००
वार्षिकं ग्राहकशुल्कं - रू. ६०.००







# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## बालेभ्यः मनरञ्जनम्

बालानां निमित्तम् एव दूरदर्शने काचन 'चानल्'व्यवस्था करणीया इति विषये गतमासे सूचना दत्ता आसीत्। बालैः कियत्कालं दूरदर्शनं द्रष्टव्यम् इति विषये चिन्तयामः चेत् तत्र प्रश्नद्वयम् उदेति -

१. 'प्रसारार्थं योग्याः कार्यक्रमाः सन्ति वा ?'
२. 'वयं तादृशान् उत्तमान् कार्यक्रमान् निर्माय निरन्तरं दूरदर्शनार्थं दातुं शक्नुयाम वा ?' इति।

उदाहरणार्थं बालानां चित्राणां विषये एव चिन्तयाम। भारतदेशे प्रतिवर्षं ७०० तः ८०० चलनचित्राणि निर्मितानि भवन्ति। तेषु चलनचित्रेषु बालानां चित्राणि अङ्गुलिगणनीयानि एव। बल्गेरियादेशः यद्यपि लघुः, तथापि तत्र ७०-८० चलनचित्राणि निर्मितानि भवन्ति, तेषु च ५०% चित्राणि बालानां निमित्तम् एव निर्मितानि भवन्ति।

अस्माकं भारतदेशे बालचित्रनिर्मापकैः उत्तमाः कथाः अन्विष्यन्ते। पञ्चसहस्रवर्षाणाम् इतिहासयुतं भारतं श्रेष्ठसंस्कृतियुतम् अस्ति। अस्माकं देशे जनपदकलाविषये महापुरुषाणां जीवनविषये, पुराणविषये च उत्तमाः कथाः उपलभ्यन्ते इति प्रायः चित्रनिर्मापकाः विस्मृतवन्तः इति भाति। एते निर्मापकाः अमेरिकादिषु देशेषु अधिकतया विक्रीयमाणाः कादम्बरीः, अन्यानि कथापुस्तकानि वा आधारीकृत्य चित्रनिर्माणं कुर्वन्ति। अस्माकं भारतदेशस्य कासुचित् पत्रिकासु प्रकटिताः विदेशीयाः कथाः आधारीकृत्य विदेशीयशैल्या मनोरञ्जनात्मकचित्राणि निर्मान्ति।

एतस्य तात्पर्यं - दूरदर्शने केवलं चलनचित्राणि एव प्रदर्शनीयानि इति न। इदानीन्तनाः बालाः क्रीडाविषये, विज्ञानविषये, नूतनसंशोधनविषये, उत्तमविचारयुतेषु विषयेषु च आसक्तिमन्तः सन्ति। किम्, एते बालाः शैक्षणिकप्रवासान् मनोरञ्जनार्थं प्रवासान् वा न इच्छेयुः ? अवश्यम् इच्छन्ति एव। विषयाणाम् अपि दारिद्र्यं नास्ति। उत्तमाः हितकराः च सर्वेऽपि विषयाः बालेभ्यः रोचन्ते एव। किन्तु तादृशं विषयम् आधारीकृत्य चित्रं निर्मातव्यम् इति इच्छा निर्मातृषु भवेत्, तावदेव।


सम्पुटः - ११ मार्च् - १९९५ सञ्चिका - १२

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००




# नामनिर्वचनम् - २०

*[ निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते । ]*

**भार्गवी -** भृगोः गोत्रापत्यं स्त्री भार्गवी । [भृगु + अण्] पार्वती लक्ष्मीः चापि भार्गवी इति उच्येते । दूर्वा अपि भार्गवीपदेन निर्दिश्यते । तथा हि कोषः - "भार्गवी पार्वतीश्रियोः । दूर्वायाम् ..." इति । (मेदिनी)

**भार्गवः -** भार्गवशब्दस्य बहवः अर्थाः कोषे निरूपिताः दृश्यन्ते । ते च -

i. भृगोः अपत्यं (गोत्रापत्यम् इति वा) भार्गवः । [भृगु + अण्] भार्गवः नाम शुक्राचार्यः ।

ii. परशुरामः अपि भार्गवः इति उच्यते ।

iii. भरतवर्षमध्ये प्राच्यदेशान्तर्गतदेशविशेषः अपि भार्गवपदेन निर्दिश्यते । 'ब्रह्मोत्तराः प्रविजयाः भार्गवाः ज्ञेयमर्दकाः' इति मार्कण्डेयपुराणम् ।

iv. कुलालः अपि भार्गवः इति उच्यते । महाभारतस्य नीलकण्ठीयटीकायाम् एषा व्युत्पत्तिः प्रदर्शिता अस्ति - 'भृगुः स्वघटवृत्तिः । जीविकार्थं भृगुणा व्यवहरतीति भार्गवः = कुलालः' इति । तथा हि महाभारतप्रयोगः - 'गत्वा तु भार्गवकर्मशालां पार्थौ पृथां प्राप्य महानुभावौ' (१.१९२.१) इति ।

v. भृगुकुलोत्पन्नः रामः, मार्कण्डेयः चापि भार्गवपदेन उच्येते । पूर्वोक्तान् अन्यान् च अर्थान् कोषः एवं निरूपयति - 'भार्गवः परशुरामे च सुधन्वनि मतङ्गजे । दैत्याचार्ये, भार्गवी तु कृष्णदूर्वोमयोः स्त्रियाम्' इति ।

**सरोजा -** सरसि जायते इति (जाता इति वा) सरोजा [सरः + जनी (प्रादुर्भावे] + डः + टाप्] । नपुंसकलिङ्गविशिष्टस्य सरोजशब्दस्य कमलम् इति अर्थः लोके रूढः । एवं रूढस्य अपि तस्य पदस्य अवयवार्थप्रतिपादकः अर्थः नास्ति इति न । अतः अवयवार्थम् आश्रित्य 'या सरोवरे जाता सा' इति अर्थः उक्तः अत्र ।

---

**सूचना -** भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।

**सङ्केतः - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु - ५६० ०८५**

वार्ताविशेषः -

# हेल्मेट्खोल्वर्यस्य विजयः

जर्मनिदेशे गतस्य नवम्बर्मासस्य षोडशदिनाङ्के प्रवृत्ते निर्वाचने हेल्मेट्खोल्वर्यः जयं प्राप्तवान् अस्ति। एतस्य एषः जयः चतुर्थः अस्ति। १९८२ तमे वर्षे पश्चिमजर्मनिदेशे प्रवृत्ते निर्वाचने हेल्मेट्खोल्वर्यः प्रथमवारं जयं प्राप्य अधिकारं प्राप्तवान् आसीत्। १९९२ तमे वर्षे जर्मन्भित्तिः यदा पतिता, तदा जर्मनिदेशयोः ऐक्यम् अभवत्। तदनन्तरकाले प्रवृत्ते प्रथम-निर्वाचने खोल्वर्यः तृतीयवारम् अधिकारं प्राप्तवान्।

१९९० तमे वर्षे प्रवृत्ते निर्वाचने खोलवर्यस्य पक्षः सामान्यतः ५५% मतानि प्राप्य जयं साधितवान् आसीत्। किन्तु अस्मिन् सन्दर्भे एतत्पक्षीयाः केचन सदस्याः पराजयं प्राप्तवन्तः इति कारणतः केषाञ्चित् एव मतानाम् अन्तरेण एषः पक्षः जयं प्राप्तवान्। तन्नाम खोल्वर्यस्य पक्षः ४८.३% मतानि केवलं प्राप्तवान् अस्ति। विरोधपक्षः ४८.१% मतानि प्राप्तवान् अस्ति। अत्यन्तम् अल्पैः मतैः जयं प्राप्तवान् इत्यतः खोल्वर्यः वर्षचतुष्टयं यावत् स्वपदवीं रक्षेत् वा न वा इति केचन सन्देहं प्रकटयन्तः सन्ति। यदि खोल्वर्यः चत्वारि वर्षाणि यावत् स्वाधिकारं व्यवस्थितं निर्वहेत्, तर्हि 'पूर्वं चतुर्दश वर्षाणि यावत् अधिकारं निरूढवतः भूतपूर्वकुलपतेः कोन्राड्-अडिन्यूर्वर्यस्य अपेक्षया अपि अधिकं कालं शासनं कृतवान्' इति ख्यातिं प्राप्नुयात्।

जर्मनिप्रजाः पुनः पुनः अधिकारपरिवर्तनं न इच्छन्ति। अतः ताभिः खोल्पक्षः क्रिस्टियन् डेमाक्रटिक्पक्षः तत्सहभागिपक्षः बनेरियनस्टियन्पक्षः (लिबरल् डेमाक्रटिक्) च पुनः चितः अस्ति। राजनैतिक-परिशीलकाः अभिप्रयन्ति - ''शासनपक्षः शासनं यथा कुर्यात्, किन्तु निरङ्कुशतया यथा न व्यवहरेत् तथा अल्पं बहुमतं जनैः दत्तम् अस्ति शासनपक्षाय'' इति।

प्रधानविरोधपक्षः 'सोषियल् डेमोक्रेट्स्' पक्षः निर्वाचनप्रणालिकायां प्रकटितवान् अस्ति यत् - यदि अस्माकं पक्षः अधिकारं प्राप्नुयात्, तर्हि प्रगतिशीलदेशेभ्यः इदानीम् आर्थिकसाहाय्यं कुर्वाणा 'मिनिस्ट्रि आफ् एकनामिक्स् को-आपरेषन्' नामिका या संस्था अस्ति, सा निष्कास्यते इति। जर्मनितः आर्थिकसाहाय्यं प्राप्नुवत्सु प्रगतिशीलदेशेषु अस्माकं देशः अपि अन्यतमः। जर्मनितः आर्थिकसाहाय्यप्राप्तेः अनुवर्तनार्थं खोल्वर्यस्य विजयः साहाय्यकः जातः अस्ति।



हेल्मेट्खोल्वर्येण १९९० तमे वर्षे सुविख्याता जवाहरलाल्नेहरुप्रशस्तिः प्राप्ता इति विषयः (चन्दमामा - १९९२) सर्वैः ज्ञातः एव।

# ऋणस्य प्रतिस्वीकरणोपायः

**सी**तापतिः लक्ष्मीपतिः च ग्रामस्य पुरोभागे उपविश्य जल्पनं कुर्वन्तौ आस्ताम् । तावता कोदण्डरामः तत्र आगत्य लक्ष्मीपतिम् उक्तवान् - ''स्वामिन् ! अहम् इदानीम् आपत्काले अस्मि । अतः शतं रूप्यकाणि आवश्यकानि । द्वित्रेषु मासेषु वृद्धिसहितं धनं प्रत्यर्पयिष्यामि । कृपया साहाय्यं करोतु'' इति ।

तदा लक्ष्मीपतिः - ''एषः धनव्यवहारः खलु ! अतः भवतः विषये यः कोऽपि ज्येष्ठः विश्वासवचनानि प्रकटयति चेत् अहं साहाय्यं कर्तुं शक्नुयाम्'' इति वदन् सीतापतिं दृष्टवान् ।

लक्ष्मीपतेः भावम् अवगत्य सीतापतिः उक्तवान् - ''कोदण्डरामः सज्जनः प्रामाणिकः च । धनस्य प्रतिदाने एकस्य दिनस्य विलम्बः भवेत् नाम । किन्तु श्रद्धया प्रत्यर्पयति सः'' इति ।

एतत् श्रुत्वा लक्ष्मीपतिः तस्मिन् एव दिने कोदण्डरामाय शतं रूप्यकाणि ऋणरूपेण दत्तवान् ।

अनन्तरदिने सीतापतिः वीथ्यां कुत्रापि गच्छन् आसीत् । मध्येमार्गं लक्ष्मीपतिः लब्धः । तदा सीतापतिः लक्ष्मीपतिम् उक्तवान् - ''भवान् कोदण्डरामविषये जागरूकः भवतु । यतः स्वीकृतं धनं शीघ्रं न प्रत्यर्पयति सः'' इति ।

एतत् श्रुत्वा लक्ष्मीपतिः आश्चर्येण पृष्टवान् - ''एवं तर्हि ह्यः कोदण्डरामविषये किमर्थं सदभिप्रायः प्रकटितः भवता ?'' इति ।

तदा सीतापतिः - ''वर्षद्वयात्पूर्वं मया कोदण्डरामाय विंशतिः रूप्यकाणि दत्तानि आसन् । तस्य प्रतिस्वीकरणार्थं सुसमयं प्रतीक्षमाणः आसम् अहम् । ह्यः सायं भवता दत्तं धनं स्वीकृत्य यदा सः गतवान्, अनुक्षणम् अहं तम् अनुसरन् मदीयानि विंशतिं रूप्यकाणि वृद्धिसहितं स्वीकृतवान्'' इति वदन् ततः निर्गतवान् एव ।






# अहङ्कारः अपगतः

रङ्गपुरनामके ग्रामे माधवनामकः कश्चित् आसीत् । माधवः बहूनि काव्यानि, अनेकान् शास्त्रग्रन्थान् च अधीतवान् आसीत् । सः ग्रामीणानां सन्देहान् शास्त्राधारेण विवृण्वन् तेषां सन्देहान् निवारयति स्म । माधवस्य बुद्धिमत्तां दृष्ट्वा बहवः आश्चर्यचकिताः भवन्ति स्म । एतस्मात् माधवे गर्वः दिने दिने वर्धते स्म ।

कदाचित् कश्चित् महानुभावः संन्यासी तं ग्रामम् आगतवान् । ग्रामीणाः सर्वे संन्यासिनं गौरवेण स्वागतीकृतवन्तः । ते तेन संन्यासिना क्रियमाणानि नीतिबोधनानि श्रद्धया शृण्वन्ति स्म । 'एतादृशः महानुभावः इतःपूर्वं कदापि न दृष्टः' इति वदन्तः ग्रामीणाः तं संन्यासिनं श्लाघन्ते स्म ।

एतं संन्यासिनं दृष्टवति माधवे असूया उत्पन्ना । 'संन्यासिना क्रियमाणं नीतिबोधनं न तावत् सारयुक्तं, तथापि जनाः वृथा तस्य प्रशंसां कुर्वन्ति । अहं तु तस्य संन्यासिनः अपेक्षया अपि महाज्ञानी अस्मि । किन्तु जनाः मम प्रशंसां न कुर्वन्ति किल !' इति चिन्तितवान् माधवः ।

माधवः कदाचित् संन्यासिनः समीपं गत्वा पृष्टवान् - "भवता किम् अधीतम् ?" इति ।

तदा संन्यासी उक्तवान् - "मम पूर्वाश्रमकाले मां पाठयितुं मम मातापितरौ बहुधा प्रयत्नं कृतवन्तौ । किन्तु किमपि प्रयोजनं न जातम् । यतः पठितं मम स्मरणे न तिष्ठति स्म । अतः मया किमपि न अधीतम्" इति ।

एतत् श्रुत्वा माधवः - "एवं तर्हि भवान् कथं नीतिबोधनं कर्तुं समर्थः ?" इति उपहासपूर्वकं पृष्टवान् ।

तदा संन्यासी शान्तस्वरेण एव उक्तवान् - "सर्वे विषयाः पुस्तके एव लिखिताः न

'अनामिका'



भवन्ति । मानवः अनुभवबलात् एव बहून् विषयान् ज्ञातुं समर्थः भवति । मया ज्ञातान् विषयान् अहं जनान् बोधयन् अस्मि'' इति ।

संन्यासिनः वचनं श्रुत्वा माधवः उक्तवान् - ''केचन स्वानुभवान् पुस्तकरूपेण लिखितवन्तः सन्ति । तेषु पुस्तकेषु भवता उक्ताः सर्वे विषयाः अपि सन्ति । इतरे अपि केचन विषयाः सन्ति । अतः भवतः बोधनस्य श्रवणापेक्षया तेषां पुस्तकानां पठनम् एव वरं खलु !'' इति ।

''आम् ! पुस्तकपठनेन एव प्रयोजनम् अधिकम्'' इति उक्तवान् संन्यासी ।

''अहं तानि सर्वाणि पुस्तकानि पठित्वा तत्रत्यान् विषयान् सम्यक् अवगतवान् अस्मि'' इति गर्वेण उक्तवान् माधवः ।

'एवं तर्हि भवान् भाग्यवान्' इति उक्तवान् संन्यासी ।

एतत् श्रुत्वा माधवः क्षणकालं विचिन्त्य उक्तवान् - ''भाग्यवान् अहं न, अपि तु भवान् एव । यतः भवतः अपेक्षया मम ज्ञानं यद्यपि अधिकं, तथापि जनाः भवन्तम् एव प्रशंसन्ति'' इति ।

तदा संन्यासी माधवम् उद्दिश्य उक्तवान् - ''मम बोधनं शृण्वन्तु, मां च आदरेण पश्यन्तु इति अहं जनान् न सूचितवान् । अपि च जनाः एव मद्विषये श्रद्धां गौरवं च प्रकटयन्ति इति यत् तेन मम सन्तोषः अपि नास्ति, दुःखम् अपि नास्ति । तं विषयम् अहं गम्भीरतया न परिगणयामि एव । भवान् तु विद्यावान् । अतः जनानां विषये चिन्तनं परित्यज्य आत्मानं धन्यं चिन्तयतु'' इति ।

संन्यासिनः वचनं श्रुत्वा माधवः उपहासपूर्वकम् उक्तवान् - ''अहं भवदपेक्षया अधिकम् अधीतवान् अस्मि । अतः भवता अहं न बोधनीयः । यदि भवान् इच्छति तर्हि मया सह शास्त्रविषये चर्चां करोतु । शास्त्रचर्चायाम् अहम् एव जयं प्राप्स्यामि । तदा मां गौरवेण द्रक्ष्यन्ति जनाः'' इति ।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान् - ''अहं यद्यपि अध्ययनं न कृतवान्, तथापि भवति विद्यमानः कश्चन लोपः मया ज्ञातः । भवता अधीतानि शास्त्राणि भवता सम्यक् न अवगतानि । मानवे ज्ञानस्य परिमाणं यावत् वा भवतु, सः कश्चित् गुरुम् आश्रयेत् एव ।

अतः कञ्चित् गुरुम् आश्रित्य भवान् सन्तोषेण जीवनं यापयतु'' इति।

एतस्मात् माधवः अतीव कुपितः । तथापि आत्मानं निगृह्य सः संन्यासिनं पृष्टवान् - ''स्वामिन् ! भवान् बहुषु स्थलेषु सञ्चारं कृतवान् अस्ति । तादृशः भवता कुत्रापि दृष्टः वा, यश्च मां बोधयितुं समर्थः अस्ति ?'' इति।

तदा संन्यासी - ''मेघनाथनामकः कश्चित् पण्डितः अस्ति। सः स्वयं ग्रामं ग्रामम् अटन् स्वकाव्यानि जनान् श्रावयति । स्वकाव्यस्थान् लोपदोषान् ज्ञातुम् एव सः सर्वत्र अटति । किन्तु अद्यपर्यन्तम् अपि तदीयस्य काव्यस्य लोपः केनापि न दर्शितः । कदाचित् सः एतं ग्रामम् अपि आगच्छेत्'' इति उक्तवान्।

तस्मात् दिनात् माधवः मेघनाथस्य आगमनम् एव प्रतीक्षमाणः स्थितवान्।

कदाचित् मेघनाथः पत्नीपुत्रैः सह रङ्गपुरम् आगतवान् । ग्रामस्थे विशाले कस्मिंश्चित् प्रदेशे मेघनाथस्य काव्यपठनार्थं व्यवस्था कृता। मेघनाथः आत्मना नूतनतया रचितं काव्यमेकं ग्रामस्थान् श्रावितवान्।

तेन श्राविता कथा कस्यचित् संन्यासिनः कथा । विद्याविहीनः रामनामकः कश्चित् कमपि उद्योगम् अपि कर्तुम् अशक्तः सन् संन्यासिभिः सह वसन् संन्यासजीवनस्य आरम्भं करोति । संन्यासजीवनार्थम् आवश्यिकाः विद्याः यद्यपि न जानाति स्म रामः, तथापि सः विद्यावत्सु अपि श्रेष्ठः



भविष्यति।

मेघनाथस्य काव्यम् उत्तमम् आसीत् । तत्रत्यानि सर्वाणि अपि वाक्यानि अर्थयुक्तानि आसन् । एतस्मात् ग्रामस्थाः मेघनाथस्य प्रतिभां प्रशंसितवन्तः । तदा माधवः उत्थाय उक्तवान् - ''भवतः काव्ये कश्चन महान् लोपः अस्ति । विद्याविहीनः कश्चित् कमपि उद्योगं विना अपि श्रेष्ठः भवति इति चेत् सर्वे अपि संन्यासिनः भवितुम् इच्छेयुः। तदा जनाः आहारं प्राप्तुं न शक्नुवन्ति। तेषां वसतिव्यवस्था महते क्लेशाय भवति । धरणार्थं वस्त्रम् अपि न भवेत्'' इति।

एतत् श्रुत्वा मेघनाथः मन्दहासपूर्वकं - ''मनुष्यः अपि कश्चन मृगः एव । जगति



मृगाः वस्त्रं धरन्ति वा, गृहं निर्मान्ति वा ? न खलु !'' इति पृष्टवान्।

''एवं तर्हि मनुष्यः अपि मृगजीवनम् आचरेत् इति भवतः अभिप्रायः खलु !'' इति पृष्टवान् माधवः।

तदा मेघनाथः उक्तवान् - ''मनुष्यः सङ्घजीवी । अतः सः मृगः इव आचरणं सर्वथा न करोति, न इच्छति च । तथैव संन्यासी भवितुम् अपि न इच्छति सः। अतः एव भवतः आहारवस्त्रवसत्यादीनां समस्या नास्ति'' इति।

संन्यासिनः वचनं श्रुत्वा ग्रामीणाः सन्तोषेण करताडनं कृतवन्तः । माधवः पराजितः चेदपि स्वपराजयम् अङ्गीकर्तुम् अनिच्छन् संन्यासिनं उक्तवान् - ''भवता निरूप्यमाणः विषयः भवता स्वयम् आचर्य वक्तव्यः। भवान् संन्यासी न इति कारणतः एव भवतः काव्यस्य मूल्यम् अपि नास्ति इति मम अभिप्रायः'' इति।

तदा मेघनाथः उक्तवान् - ''एतद्विषये अस्माभिः सम्यक् एव चिन्तनं कृतम् अस्ति। संन्यासी नाम सः पत्नीपुत्रवान् न स्यात् इति न अर्थः। यः अहङ्कारं स्वार्थं च त्यजति सः संन्यासी भवति। वयम् अपि तदेव कुर्वन्तः स्मः'' इति।

एतत् श्रुत्वा माधवः - ''एवं तर्हि भवान् नूतनतया किमर्थं काव्यरचनां करोति ? कीर्तिः प्राप्तव्या इति भवतः स्वार्थः एव अत्र कारणं खलु ! पूर्वजैः लिखितानां काव्यानाम् एव प्रचारं कर्तुम् अशक्ष्यत् किल भवान् ?'' इति पृष्टवान्।

तदा मेघनाथः गम्भीरस्वरेण उक्तवान् - ''अस्माभिः लिखितेषु काव्येषु यदि लेखकस्य नाम न भवति, तर्हि तत् अप्रामाणिकं भवति। श्रीरामः अन्यस्य नाम्नि यदि राज्यपालनं कृतवान् स्यात्, कालिदासः अपरस्य नाम्नि यदि काव्यं लिखितवान् स्यात्, तर्हि तत् असत्यम् अप्रामाणिकं च अभविष्यत्, तेन अग्रिमपरम्परायां समस्याः उत्पन्नाः स्युः। इतिहासस्य न्याय्यत्वं सम्पादयितुम् एव वयम् अस्माकं नाम्नि एव काव्यं लिखन्तः स्मः। प्रचारविषये भवता किञ्चित् उक्तम्। तद्विषये किञ्चिदिव मम अभिप्रायं विवृणोमि अहम्। अस्माकं काव्यं कस्मैचित् महाराजाय

समर्प्यते चेत् सः लक्षाधिकरूप्यकाणि दत्त्वा अस्मान् सम्मानयेत् । कीर्तेः आकांक्षा नास्ति इत्यतः एव वयम् एवं ग्रामं ग्रामं गच्छन्तः अस्माकं काव्यसारं जनान् वदन्तः स्मः । कीर्तिकांक्षया सकुटुम्बम् एवं ग्रामं ग्रामं प्रति अटनं नाम कष्टसाध्यम् एव कार्यम् । परिणामः अपि अत्यल्पः एव । अपि च नूतनतया अस्माभिः किमर्थं काव्यानि लिख्यन्ते इत्यस्य उत्तरं तावत् एवम्- आरम्भकाले मानवः वस्त्रं विना अटति स्म । अनन्तरदिनेषु पर्णैः शरीरम् आच्छादयति स्म । तदनन्तरकाले तन्तुभिः वस्त्रनिर्माणम् आरब्धम् । इदानीन्तनकाले तु जनाः कौशेयवस्त्राणि अपि धरन्ति । कालक्रमशः वस्त्रधारणे यथा परिवर्तनं जातं, तथैव अभिरुचिविषये अन्यान्यविषयेषु च परिवर्तनं भवति । तदनुसारं नूतनाः कवयः उत्पद्यन्ते, नूतनानि काव्यानि सृष्टानि भवन्ति च । नूतनकाव्यम् एव किमर्थं रचनीयम् इति ज्ञातुं भवता कविना भवितव्यम्'' इति ।



एतत् श्रुत्वा माधवः आश्चर्यचकितः । सः एतादृशान् विषयान् गभीरतया नैव चिन्तितवान् आसीत् । मेघनाथस्य बुद्धिशक्तिः अपूर्वा इति तेन ज्ञातं चेदपि सः इतोऽपि बहून् प्रश्नान् पृच्छन् ग्रामस्थानां पुरतः स्वबुद्धिमत्तां प्रदर्शयितुम् इष्टवान् ।

मेघनाथः चर्चासमये पुनः पुनः आत्मानम् उद्दिश्य बहुवचनस्य प्रयोगं करोति स्म । सः 'अहम्' इति स्थाने 'वयम्' इति वदति स्म । 'विधेयभावेन चेत् सः आत्मानम् 'अहम्' इति अवदिष्यत् । 'वयम्' इति कथनात् तस्मिन् अहम्भावः अस्ति इति तु स्पष्टम्' इत्येवं चिन्तयन् माधवः मेघनाथम् उद्दिश्य - ''भवति यद्यपि स्वार्थः नास्ति, तथापि अहम्भावः तु महान् अस्ति'' इति वक्तव्यम् इति चिन्तितवान् । किन्तु ग्रामीणानां पुरतः तथा उक्तं चेत् अगौरवं भवेत् इति विचिन्त्य माधवः सविनयं मेघनाथं नमस्कुर्वन् उक्तवान् - ''भवान् न सामान्यः, अपि तु महानुभावः । भवान् कीर्तिम् अपि न इच्छति । स्वार्थभावना अपि नास्ति भवतः । किन्तु भवान् 'अस्माभिः रचितम्, वयं वदामः' इति पुनः पुनः बहुवचनप्रयोगं कुर्वन् अस्ति । भवतः

एतादृशेन व्यवहारेण सामान्यजनाः 'भवान् अहङ्कारी' इति चिन्तयेयुः । अहं तु तथा न चिन्तयामि । किन्तु काव्यलेखकाः भवन्तः अनेके सन्ति इति अहं चिन्तयामि" इति।

एतत् श्रुत्वा मेघनाथः किञ्चित् अपि न कुपितः । अपि तु सः शान्तस्वरेण एव उक्तवान् - "आम् ! सरस्वतीसदृशीं मेघवतीम् अहं पत्नीत्वेन प्राप्तवान् इति तु मम सौभाग्यम् । मम पूर्वतनं नाम रङ्गनाथः । सर्वाणि काव्यानि अपि आवां मिलित्वा एव रचयावः । अतः उभयोः नाम अपि योजयित्वा मेघनाथः जातम् अस्ति । अतः मेघनाथः न एकाकी" इति।

माधवः आश्चर्येण क्षणकालं मौनं स्थित्वा - "स्वामिन् ! कृपया मां क्षाम्यतु" इति वदन् मेघनाथं नमस्कृतवान्।

तदा मेघनाथः मन्दहासपूर्वकं - "अन्येषां समीपे क्षमायाचनपरिस्थितिः कदापि यथा न भवेत् तथा व्यवहरतु भवान् । आकाशं लक्ष्यीकृत्य थूत्कारः कृतः चेत् तत् स्वस्य उपरि एव पतति । अतः तादृशकार्याणि मा करोतु" इति बोधितवान्।

एतत् श्रुत्वा अपि माधवः अनुक्षणं पृष्टवान् - "मया दोषः कृतः इति तु सत्यम् । किन्तु भवान् आत्मनः तोलनम् आकाशेन सह कृतवान् इति यत्, तत् अहम्भावद्योतकं खलु !" इति पृष्टवान्।

तदा मेघनाथः उक्तवान् - "अहं माम् आकाशेन तोलनं न कृतवान् । भवान् असूयया मम अपमाननं कर्तुम् इष्टवान् । किन्तु भवान् एव अपमानितः अभवत्। अतः भवता एव अहम् आकाशसदृशः कृतः । वस्तुतः मयि विशेषता कापि नास्ति" इति।

एतत् श्रुत्वा माधवः मेघनाथं साष्टाङ्गं नमस्कृत्य प्रार्थितवान् - 'कृपया मां शिष्यत्वेन स्वीकरोतु' इति।

मेघनाथः माधवस्य वचनम् अङ्गीकृतवान्।

मेघनाथस्य शिष्यत्वप्राप्त्या माधवस्य शास्त्रज्ञानम् अधिकं जातम्। अहङ्कारं पूर्णतः परित्यज्य सः जीवने तृप्तिम् अनुभूतवान्।






(मोहनेन अपहृतायाः भुवनसुन्दर्याः प्रतिप्राप्त्यर्थं ग्रीक्जनैः कृतः शान्तियत्नः विफलः सञ्जातः। भुवनसुन्दर्याः पतिः प्रतापः ट्राय्नगरस्य उपरि आक्रमणार्थं ग्रीक्राजकुमारान् प्रार्थितवान् यत् - स्वसाहाय्यार्थम् आगन्तव्यम् इति। ग्रीक्सैन्यं महता परिश्रमेण नौकाद्वारा युद्धार्थं प्रस्थितम्। रूपधरः उन्मत्तः इव व्यवहृतवान्। वज्रकायः स्त्रीवेषधारी सन् कस्यचित् महाराजस्य अन्तःपुरे निलीय स्थितवान्। तथापि एतान् सर्वान् अपि स्वसैन्ये योजयित्वा ग्रीक्सैन्यं ट्राय्तीरं प्राप्तवत्। अनन्तरम्...)

ग्रीक्नौकातः अवतीर्य चन्द्रप्रभः प्रथमं ट्राय्भूमौ पादं स्थापितवान्। अनन्तरं वज्रकायः अवतीर्णः। अन्ये सर्वे अपि वज्रकायम् अनुसरन्तः अवतीर्य युद्धम् आरब्धवन्तः।

ट्राय्नगरे मरालनामकः वीरः आसीत्। आयुधैः मरालस्य मारणम् अशक्यम् आसीत्। तस्मिन् दिने प्रवृत्ते युद्धे मरालः बहून् ग्रीक्योधान् यमलोकं प्रेषितवान्। वज्रकायः मरालं सम्मुखीकृतवान्। बहुसमयपर्यन्तं मराल-वज्रकाययोः घोरं युद्धं प्रवृत्तम्। अन्तिमक्षणे मरालः शिलाखण्डेन पादाघातं प्राप्य अधः पतितवान्। अनुक्षणं वज्रकायः मरालस्य उरसि उपविश्य तस्य कण्ठमर्दनपूर्वकं तं मारितवान्।

मरालस्य मरणात् भीताः ट्राय्सैनिकाः ततः स्वनगरं प्रति पलायितवन्तः। अनन्तरं



ग्रीक्सैनिकाः स्वनौकाः समुद्रतीरे एव सुरक्षितप्रदेशे संस्थाप्य ततः गत्वा ट्रायनगरस्य दुर्गस्य उपरि आक्रमणं कृतवन्तः।

दश वर्षाणि यावत् महान् संघर्षः प्रवृत्तः। किन्तु तेषु दिनेषु महति संघर्षे प्रवृत्ते अपि घोरं युद्धं तु न प्रवृत्तम्। परं काश्चन घटनाः संवृत्ताः।

ट्रायराजस्य वर्धनस्य पत्नीद्वयम्। मोहनस्य माता वर्धनस्य द्वितीया पत्नी। वर्धनस्य पञ्चाशत् पुत्राः आसन्। तेषु नवदश पुत्राः द्वितीयपत्न्यां जाताः। तेषु नवदशसु वीरसिंहः प्रथमः पुत्रः। इलियड्नामकः अपि तस्याः पुत्रेषु अन्यतमः। ज्योतिषिकैः उक्तम् आसीत् - इलियड् यदा विंशतिवर्षीयः भविष्यति, तदनन्तरं केनापि ट्रायनगरं जेतुम् अशक्यम् इति।

वज्रकायः एतं विषयं जानाति स्म। अतः सः चिन्तितवान् यत् कथमपि इलियड् मारणीयः इति।

कदाचित् इलियड् देवालयस्य प्राङ्गणे स्वकीयम् अश्वं चारयन् आसीत्। तस्मिन् समये तत्र गतः वज्रकायः आयुधेन इलियड्वर्यं मारितवान्। तस्य मरणात् सर्वाः ट्रायप्रजाः अतीव दुःखिताः।

वर्धनस्य पुत्रेषु वृकाक्षनामकः कश्चित् आसीत्। वृकाक्षः कदाचित् वाटिकायां वृक्षशाखाः कर्तयित्वा ताभिः काष्ठानां निर्माणं कुर्वन् आसीत्। तस्मिन् समये वज्रकायः रहस्येन तां वाटिकां प्रविश्य वृकाक्षं बद्ध्वा तं स्वशिबिरं नीतवान्, ग्रीक्नायकेभ्यः समर्पितवान् च। यः महाराजः ग्रीक्सैन्यस्य सुराव्यवस्थां करोति स्म, तस्मै महाराजाय सेवकरूपेण वृकाक्षं विक्रीतवन्तः ग्रीक्नायकाः। तस्य राज्ञः आस्थानस्थः कश्चित् महाराजाय प्रभूतं धनं दत्त्वा वृकाक्षम् अनुकम्पया मोचितवान्। तत्र सेवकवृत्तितः मुक्तिं प्राप्य वृकाक्षः ट्रायनगरं प्रति आगच्छन् आसीत्। तस्मिन् समये मध्येमार्गं वृकाक्षं दृष्टवान् वज्रकायः तं मारितवान्।

वज्रकायः एतादृशानि बहूनि साहसकार्याणि कृतवान्।

ग्रीक्सैनिकानां तु युद्धं विना अन्यत् कार्यं न आसीत्। तस्मात् वज्रकायः सैनिकानां

साहाय्येन ट्रायनगरं परितः लुण्ठनम् आरब्धवान्। अनन्तरं सः ससैन्यम् ऐडापर्वतं गतवान्। तावता प्रशंसननामकः कश्चित् तं सम्मुखीकृतवान्।

प्रशंसनः मोहनस्य दायादः। मोहनः यदा भुवनसुन्दर्याः अपहरणार्थं स्पार्टानगरं गतवान् आसीत्, तस्मिन् समये प्रशंसनः अपि मोहनेन सह गतवान् आसीत्, मोहनस्य साहाय्यं च कृतवान् आसीत्। एवं सत्यपि प्रशंसनः ग्रीक्-ट्रायदेशयोः युद्धे भागं न गृहीतवान् आसीत्। स्वसैन्यम् अपि युद्धार्थं न प्रेषितवान् आसीत्।

प्रशंसनः स्वगोपालकैः सह ऐडापर्वते आसीत्। तस्मिन् एव समये वज्रकायः, तस्य सैनिकाः च तत्र गत्वा लुण्ठनम् आरब्धवन्तः। तेषाम् आक्रमणं सम्मुखीकर्तुम् अशक्तः प्रशंसनः ततः पलायितवान्। ग्रीक्सैनिकाः प्रशंसनस्य गोपालकान् मारयित्वा धेनुसमूहं स्वायत्तीकृतवन्तः।

एतां घटनां दृष्ट्वा प्रशंसनः चिन्तितवान् यत् - कथमपि एते ग्रीक्सैनिकाः सम्मुखीकरणीयाः इति। अतः सः ससैन्यं ट्रायनगरं गतवान्। ट्रायपक्षतया युद्धे भागं गृहीतवान्। प्रशंसनः महान् योधः आसीत्। प्रशंसनस्य पराक्रमविषये वज्रकायस्य अपि महत् गौरवम् आसीत्। ट्रायसैनिकाः अपि प्रशंसनं महता गौरवेण पश्यन्ति स्म। प्रशंसनः युद्धे बहुधा व्रणितः चेदपि प्राणापायात् रक्षितः भवति स्म।

अस्मिन् युद्धे प्रशंसनस्य मरणसम्भवः एव नासीत्। यतः ट्रायपूर्वजैः लिखितम् आसीत् - 'प्रशंसनस्य वंशजः एव भाविनि






काले ट्रायनगरस्य महाराजः भविष्यति' इति।

ट्रायनगरस्य मित्रनगराणि बहूनि आसन्। तेषु केषाञ्चन नगराणाम् उपरि आक्रमणं कृत्वा तानि नगराणि अपि स्वायत्तीकृतवान् वज्रकायः। तेन स्वायत्तीकृतेषु नगरेषु वीरसिंहस्य श्वशुरनगरम् अपि अन्यतमम्। ग्रीक्जनैः सह प्रवृत्ते युद्धे वीरसिंहस्य श्वशुरः, तस्य सप्त पुत्राः च हताः अभवन्।

अनन्तरकाले ग्रीक्सैनिकानां मध्ये एव काश्चन घटनाः संवृत्ताः।

कदाचित् चक्रवर्ती रूपधरम् आज्ञप्तवान् यत् - भवान् त्रेस्नगरं गत्वा नौकाद्वारा अत्यावश्यकानि आहारवस्तूनि आनयतु इति। रूपधरः तदनुसारम् आहारधान्यानाम् आनयनार्थं गतवान्, परन्तु रिक्तहस्तः सन् एव प्रत्यागतवान्। एतत् दृष्ट्वा ग्रीक्वीरेषु अन्यतमः प्रबोधः - "भवान् अलसः, निष्प्रयोजकश्च" इति रूपधरम् उपहसितवान्।

तदा रूपधरः - "मया धान्यम् न आनीतम् इति यत् तत्र कारणं मम आलस्यं न। अपि तु मया धान्यं न प्राप्तम्। यदि चक्रवर्ती एतस्य कार्यस्य निमित्तं भवन्तम् एव प्रेषितवान् स्यात्, तर्हि भवान् आनेतुम् अशक्ष्यत् वा?" इति पृष्टवान्।

एतस्मात् प्रबोधे छलः उत्पन्नः। अनुक्षणं सः नौकाद्वारा प्रस्थितः। प्रभूतम् आहारधान्यम् आनीतवान् च। एतस्मात् रूपधरः पराजितः, अपमानितः च। अतः प्रबोधविषयकः द्वेषः रूपधरे दिने दिने वर्धते स्म। द्वेषं साधयन् रूपधरः किञ्चन कुतन्त्रं चिन्तितवान्।

कदाचित् रूपधरः चक्रवर्तिने एवं वार्तां प्रेषितवान् - "रात्रौ स्वप्ने काचन देवता प्रत्यक्षीभूय 'अस्माकं ग्रीक्सैनिकानां शिबिरे महान् अनर्थः सम्भविष्यति' इति माम् उद्दिश्य उक्तवती। अतः एतस्मात् अनर्थात् आत्मनः रक्षणार्थम् अस्माभिः एकं दिनं यावत् अस्माकं वासस्थानस्य परिवर्तनं करणीयम्" इति।

रूपधरस्य वचनं चक्रवर्तिने अरोचत। अतः सः अनुक्षणं सर्वेषां वासार्थं स्थानान्तरं कल्पितवान्। सर्वे अपि ग्रीक्सैनिकाः एकं

दिनं यावत् नूतनतया कल्पिते वासस्थाने वासं कृतवन्तः । पूर्वतनं वासस्थानं यदा रिक्तम् अभवत्, तदा रूपधरः रहस्येन तत्र प्रबोधस्य वासप्रकोष्ठं प्रविश्य, तत्र सुवर्णनाणकैः पूर्णां गोणीम् एकां रहस्येन स्थापितवान् । अनन्तरं सः कस्यचित् कारागारवासिनः द्वारा बलात् पत्रमेकं लेखितवान् । तत् पत्रं वर्धनेन प्रबोधम् उद्दिश्य लिखितम् इव आसीत् । पत्रे एवं लिखितम् आसीत् – 'ग्रीक्जनानां वञ्चनार्थम् एव भवतः सूचनानुसारं सुवर्णनाणकानि प्रेषितवान् अस्मि' इति ।

अनन्तरं रूपधरः कारागारवासिनम् उक्तवान् – "भवान् इदानीम् एव गत्वा एतत् पत्रं प्रबोधाय ददातु" इति । कारागारवासी तत् पत्रं स्वीकृत्य प्रबोधाय दातुं गतवान् । किन्तु मध्येमार्गं तं कारागारवासिनं स्वसाहाय्यकानां द्वारा मारितवान् रूपधरः ।

अनन्तरदिने प्रातःकाले पूर्वतनं स्ववासस्थानं प्रति आगमनसमये ग्रीक्जनैः मध्येमार्गं मृतः कारागारवासी दृष्टः । मृतस्य समीपे विद्यमानं पत्रं तैः प्राप्तम् । तस्य पत्रस्य पठनात् ग्रीक्सैनिकाः चिन्तितवन्तः – एतत् अत्यन्तम् अपायकरं पत्रम् इति । अतः ते तत् पत्रं चक्रवर्तिने प्रेषितवन्तः ।

चक्रवर्ती तत् पत्रं पठित्वा प्रबोधम् आहूय, पत्रविषयम् उक्तवान्, तस्य विचारणं कृतवान् च ।

तदा प्रबोधः उक्तवान् – "अहं देशद्रोही न, अपि तु देशभक्तः । अन्यच्च वर्धनेन कदापि



मह्यं सुवर्णनाणकानि न दत्तानि । अत्र किमपि कुतन्त्रं स्यात् । अतः कृपया पुनरपि एकवारं परिशीलयतु भवान्" इति ।

एतत् श्रुत्वा तत्रैव स्थितः रूपधरः चक्रवर्तिनम् उक्तवान् – "तस्य वासस्थानं परिशीलयते चेत् वस्तुस्थितिः ज्ञायेत" इति ।

अनन्तरं प्रबोधस्य वासस्थानस्य परिशीलनं कृतम् । तत्र सुवर्णनाणकानां गोणी प्राप्ता । प्रबोधः देशद्रोही इति निर्णीतम् अभवत् ।

तादृशस्य देशद्रोहस्य दण्डनं नाम सैनिकैः शिलाखण्डेन ताडनपूर्वकं देशद्रोहिणः मारणम् । तेन एव प्रकारेण सर्वे सैनिकाः तं शिलाखण्डेन ताडयित्वा मारितवन्तः ।

मरणावस्थायां प्रबोधः दीनस्वरेण - ''हन्त ! सत्यस्य नाशः एव अभवत् खलु !'' इति विलापं कृतवान् ।

प्रबोधस्य हननं सर्वप्रकारेण अपि अनुचितम् एव आसीत् । सः न केवलं निरपराधी, अपि तु प्रतिभावान् अपि आसीत् ।

प्रबोधः ग्रीक्जनानां समययापनार्थं क्रीडासाधनानि यानि आसन्, तेषाम् अक्षाणां संशोधकः आसीत् । तेन बहूनि वस्तूनि अन्विष्टानि आसन् । तेन दीपस्तम्भाः, तुला, मापकसाधनानि च अन्विष्टानि आसन् । लिपिः अपि प्रबोधेन एव संशोधिता आसीत् । सः सैनिकशिबिराणाम् इतरेषां च प्रमुखस्थलानां च रक्षणाक्रमम् अपि अन्विष्टवान् आसीत् । अतः ग्रीक्जनानां प्रबोधविषये महत् गौरवम् आसीत् ।

ग्रीक्देशे निवसता प्रबोधस्य पित्रा पुत्रस्य मरणवार्ता ज्ञाता । पुत्रस्य मरणात् अतीव दुःखितः सः पुत्रस्य मरणकारणं ज्ञातुम् इच्छन् ट्रायनगरम् आगत्य धैर्येण चक्रवर्तिनं पृष्टवान् - ''केन कारणेन मम पुत्रस्य हननं कृतं भवता ? सः द्रोही इति निर्णेतुं आधारः कः आसीत् ?'' इति ।

चक्रवर्ती प्रबोधस्य पितरम् उत्तरं वक्तुं न इष्टवान् । 'विना कारणं प्रबोधः हतः । रूपधरः कुतन्त्रेण प्रबोधं मारितवान् स्यात्' इति प्रायशः चक्रवर्ती स्पष्टं जानाति एव । अतः चक्रवर्ती रूपधरविषयकेण विश्वासेन, तस्य गौरवं रक्षितुम् इच्छन्, प्रबोधस्य पित्रा कृतम् आरोपं निराकृतवान् ।

ट्रायनगरं प्रति आगमनेन अपि कार्यसिद्धिः न जाता इति कारणतः प्रबोधस्य पिता ग्रीक्देशं प्रतिगत्य काश्चन ग्रीक्वीरपत्न्यः उद्दिश्य - असत्यवचनम् उक्तवान् - ''भवतीनां पतिः ट्रायनगरस्य काञ्चित् स्त्रियं परिणीतवान् अस्ति । सः ताम् अत्र आनेष्यति । सा एव इतःपरं महाराज्ञी भविष्यति च'' इति ।

एतां वार्तां श्रुत्वा अतीव दुःखिताः काश्चन ग्रीक्स्त्रियः आत्महत्यां कृतवत्यः ।

(अनुवर्तते)



# अनवधानता

सुवर्णपुरस्थः शेषाद्रिः महाधनिकः । सः वाणिज्यदायित्वं पुत्रेभ्यः दत्त्वा चतुरट्टयुते उन्नते भवने सुखेन वसति स्म ।

कदाचित् शेषाद्रिः स्वभवनस्य द्वितीयाट्टात् पतितः, तेन च सः पादे व्रणितः अभवत् इति तस्य मित्रेण माधवेन ज्ञातम् ।

एतां वार्तां श्रुत्वा माधवः शेषाद्रिं द्रष्टुं गतवान् । सः उक्तवान् - ''किं भोः, तावती अजागरूकता वा ? भित्तेः अवरोधे सत्यपि भवान् अधः पतितवान् इति यत् तत् महाश्चर्यकरम् एव'' इति ।

तदा शेषाद्रिः महतीं वेदनाम् अनुभवन् उक्तवान् - ''माधव ! किमिति वदामि भोः ! एतस्याः घटनातः यद्यपि अहं महतीं वेदनाम् अनुभवामि, तथापि आश्चर्यम् अपि भवति मम । यतः प्रतिदिनं रात्रौ भोजनानन्तरं ताम्बूलचर्वणं कृत्वा भित्तेः बहिः निष्ठीवनं कृत्वा अन्तः गत्वा मञ्चे शयनं मम अभ्यासः । किन्तु तस्मिन् दिने अहं किमपि चिन्तयन् मञ्चे निष्ठीवनं कृत्वा शयनार्थम् इति भित्तेः अपरपार्श्वं गत्वा पतितवान्'' इति ।

शेषाद्रेः वचनं श्रुत्वा माधवः हासं निरोद्धुम् अशक्तः उच्चैः हसितवान् ।






# विलासी चित्रसेनः

साहसी त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । शाखायां लम्बमानं शवं स्कन्धे आरोप्य, मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! भवान् कस्यचित् देशस्य श्रेष्ठः राजा अस्ति । अतः भवान् सर्वविधानि अपि सुखानि निरातङ्कम् अनुभोक्तुं शक्नोति । एवं सत्यपि भवान् सर्वसुखं परित्यज्य मध्यरात्रसमये अस्मिन् भयङ्करे श्मशाने महान्तं परिश्रमं वहन् अस्ति इति यत्, तस्मात् मम मनः अतीव खिद्यते । एतत् कार्यं प्रति यः भवन्तं प्रेरितवान्, सः प्रायः भवतः सुखसन्तोषादिकं न सहते । अतीव सामन्याः अपि कदाचित् इतरेषां सौजन्यस्य सौम्यगुणानां च दुरुपयोगं कुर्वन्तः स्ववाक्चातुर्येण असत्यवचनेषु एव जनानां विश्वासः यथा उत्पद्येत, अनीतिव्यवहारे एव जनाः यथा प्रवर्तेरन्, तथा कुर्वन्ति । एतस्य निदर्शनार्थं चित्रसेननामकस्य महाराजस्य

## वेतालकथा



कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

मगधदेशस्य राजा चित्रसेनः विलासप्रियः आसीत् । सः आदिनं नृत्यादिकं पश्यन् गीतवाद्यादिकं च शृण्वन् विलास जीवनं यापयति स्म । एतस्मात् राज्यपरिपालनं व्यवस्थितं न प्रचलति स्म ।

महामन्त्री सुबुद्धिः कदाचित् महाराजं चित्रसेनम् उक्तवान् यत् - राज्यपरिपालनं व्यवस्थितं न प्रचलति इति ।

एतत् श्रुत्वा चित्रसेनः कोपेन पृष्टवान् - ''किं राज्यपरिपालनं सम्यक् न प्रचलति ? मन्त्रिणः किं कुर्वन्तः सन्ति ? अधिकारिणः अन्ये च उद्योगिनः स्वकार्यं श्रद्धया निर्वहन्तः न सन्ति वा ?'' इति ।

तदा सुबुद्धिः उक्तवान् - ''यदि भवान् न परिशीलयति, तर्हि कोऽपि श्रद्धया कार्यं न करोति । अतः अधिकारिणः उद्योगिनः च किं कुर्वन्तः सन्ति इति भवान् एव वेषान्तरं धृत्वा गत्वा पश्यतु'' इति ।

चित्रसेनः मन्त्रिणः सुबुद्धेः वचनं गम्भीरतया परिगणितवान्, अपि च तस्मिन् एव दिने रात्रौ वेषान्तरं धृत्वा प्रस्थितवान् च । भ्रष्टाचारे मग्नाः केचन अधिकारिणः राज्ञा दृष्टाः ।

अनन्तरदिने राजा चित्रसेनः अधिकारिणः आहूय पूर्वदिने आत्मना दृष्टस्य भ्रष्टाचारस्य विषयं विचारितवान् । तदा अधिकारिणः किमपि अजानन्तः इव महाराजम् उक्तवन्तः - ''प्रभो ! वयं तु श्रद्धया एव कार्यं कुर्वन्तः स्मः । अस्मद्विषये असूयाविष्टाः केचन भवत्समीपे मिथ्यारोपं कृतवन्तः स्युः'' इति ।

तदा चित्रसेनः उक्तवान् - ''भवद्भिः क्रियमाणं कार्यम् अहम् एव प्रत्यक्षं दृष्टवान् अस्मि'' इति ।

एतत् श्रुत्वा अधिकारिणः महाराजस्य पादयोः पतित्वा तस्य क्षमां याचितवन्तः ।

एतस्मात् प्रकरणात् सर्वे ज्ञातवन्तः यत् - महाराजः चित्रसेनः वेषान्तरं धृत्वा आगत्य उद्योगिनां कार्यं परिशीलयति इति । अतः तस्मात् दिनादारभ्य स्वस्वकार्यं श्रद्धया निर्वहन्ति स्म अधिकारिणः ।

चित्रसेनः यथापूर्वं विलासे एव दिनस्य

अधिकं समयं यापयति स्म । मन्त्री सुबुद्धिः राज्यपरिपालनविषये किमपि वदति चेत् राजा मन्त्रिणं वदति स्म - "अहं वेषान्तरं धृत्वा सर्वेषाम् अपि व्यवहारं परिशीलयन् अस्मि एव । इतोऽपि यदि काचित् समस्या अस्ति, तर्हि तस्याः परिहारः निवारणं च भवतः दायित्वम्" इति ।

'अधिकारिणां भ्रष्टाचारनिवारणेन केवलं राज्यपरिपालनं व्यवस्थितं न भवति । अपि तु राज्यपालने महाराजः एव स्वयम् आसक्तिमान् भवेत् । किन्तु राजा मम हितवचनं न श्रृणोति' इति विचिन्त्य सुबुद्धिः समीपस्थे अरण्ये निवसन्तं राजर्षिं जनकसेनं राजधानीं प्रति आहूतवान् ।

मगधराजवंशीयः जनकसेनः अतीव वृद्धः । सः ऐहिकसुखात् विरक्तः समीपस्थे अरण्ये तपः करोति स्म । मगधराजाः जनकसेनस्य वचनं वेदवाक्यं मन्यन्ते स्म ।

राजधानीम् आगतं जनकसेनं सगौरवं स्वागतीकृतवान् राजा चित्रसेनः । चित्रसेनस्य विनयव्यवहारात् सन्तुष्टः जनकसेनः - "वत्स ! भवान् तु सकलगुणसम्पन्नः इव दृश्यते । किन्तु भवतः पालने प्रजाः सुखेन न सन्ति इति भाति खलु !" इति पृष्टवान् ।

जनकसेनस्य एतं प्रश्नं श्रुत्वा चित्रसेनः - "अहं यथाशक्ति राजोद्योगिनां व्यवहारं वेषान्तरं धृत्वा परिशीलयन् अस्मि, भ्रष्टाचारात् तान् निवारयन् अस्मि च । ततोऽपि अधिकं किं करणीयम् इति न




जानामि अहम् । मम सन्देहः उत्पन्नः अस्ति यत् - मम मन्त्रिणः अधिकारिणः च स्वकार्यनिर्वहणे असमर्थाः इति । अतः भवान् तान् परीक्ष्य स्वाभिप्रायं वक्तुं शक्नोति वा ?" इति पृष्टवान् ।

चित्रसेनस्य वचनं श्रुत्वा जनकसेनः अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् - "यदि राजा समर्थः स्यात्, तर्हि मन्त्रिणः अधिकारिणः च अपि समर्थाः भवन्ति एव । वेषान्तरं धृत्वा उद्योगिनाम् अवलोकनसमये प्रजाहितम् एव भवतः लक्ष्यं भवतु । वर्षानन्तरं पुनरपि अहम् अत्र आगमिष्यामि । तत्रापि, भवान् वेषान्तरधारी यदा भवति, तदा एव भवतः दर्शनं प्राप्स्यामि अहम्" इति ।



चित्रसेनः अङ्गीकारपूर्वकं शिरः चालितवान् । अनन्तरं जनकसेनः ततः निर्गतवान् ।

अनन्तरदिनेषु चित्रसेनः तदा तदा वेषान्तरं धृत्वा नगरे सञ्चरति स्म । एवंप्रकारेण प्रजानां समस्याः राज्ञा चित्रसेनेन ज्ञायन्ते स्म । सः आत्मना दृष्टानां समस्यानां परिहारोपायं तत्रैव सूचयति स्म ।

एवं स्थिते अपि सः स्वविलासजीवनं न परित्यक्तवान् । चित्रसेनस्य स्वभावम् अवगत्य मन्त्री सुबुद्धिः अपि मौनम् आश्रयति स्म ।

एकं वर्षम् अतीतम् । कदाचित् चित्रसेनः विलासमन्दिरे तल्पे शयनं कृत्वा गीतं शृणोति स्म । महता सन्तोषेण मध्ये मध्ये करताडनम् अपि करोति स्म । तदा अकस्मात् तत्र जनकसेनः आगतवान् ।

जनकसेनस्य आगमनम् अनिरीक्षितम् आसीत् । अतः चित्रसेनः झटिति उत्थाय अग्रे गत्वा जनकसेनस्य पादयोः नमस्कारं कृतवान् ।

नमस्कृतवन्तम् अपि चित्रसेनम् औदासीन्येन पश्यन् जनकसेनः – "एकस्य वर्षस्य अवधौ अपि भवतः राज्ये परिवर्तनं किमपि न दृश्यते । मया उक्तं श्रद्धया पालयन् अस्ति वा भवान् ?" इति पृष्टवान् ।

तदा चित्रसेनः जनकसेनं सविनयम् उक्तवान् – "आम्, श्रीमन् ! सर्वदा अहं वेषान्तरं धृत्वा प्रजानां योगक्षेमं समस्याः च परिशीलयन् अस्मि । ह्यः अपि कस्यचित् दरिद्रस्य गृहं गतवान् आसम् । अस्वस्थस्य तस्य औषधोपचारव्यवस्थां कारयित्वा आगतवान् अहम्" इति ।

चित्रसेनस्य वचनं श्रुत्वा जनकसेनः उक्तवान् – "यदा भवान् वेषान्तरं धृत्वा सञ्चरन् भवति, तदा प्रजाहितम् एव भवतः लक्ष्यं भवतु, इति मया भवान् उक्तः आसीत् खलु ! किन्तु भवान् मद्वचनं श्रद्धया पालयन् नास्ति" इति ।

एतस्मात् वचनात् खिन्नः चित्रसेनः – "महता ज्वरेण पीडितस्य कस्यचित् औषधोपचारं कारितवान् अहम् । तथापि भवतः वचनं मया श्रद्धया पाल्यमानं नास्ति इति भवान् यत् कथयति, तत् उचितं वा ?"

इति पृष्टवान् ।

तदा जनकसेनः उक्तवान् - "दरिद्रस्य औषधोपचारः कृतः भवता इति मया ज्ञातम् एव । किन्तु भवान् वेषान्तरं यदा धृतवान् भवति, तदानीन्तनविषयः मया उच्यमानः अस्ति" इति ।



एतस्मात् वचनात् आश्चर्यचकितः चित्रसेनः उक्तवान् - "तदा अहं वेषान्तरं धृतवान् आसं खलु !" इति ।

'वेषान्तरं नाम कीदृशम् ?' इति पृष्टवान् जनकसेनः ।

'सामान्यकृषिकस्य वेषः' इति उत्तरितवान् चित्रसेनः ।

तदा जनकसेनः पृष्टवान् - "सामान्यः कश्चित् कृषिकः अपि मगधदेशीयः जनः एव खलु ! अतः प्रजासु दृश्यमानेषु वेषेषु अन्यतमः वेषः यदि ध्रियते भवता, तर्हि तत् वेषान्तरं कथं भवेत् ?" इति ।

एतत् श्रुत्वा राजा चित्रसेनः ससन्देहं पृष्टवान् - "तर्हि वेषान्तरं नाम किम् ? अस्य देशस्य राज्ञा मया कीदृशः वेषः धरणीयः ?" इति ।

तदा जनकसेनः मन्दहासपूर्वकम् उक्तवान् - "भवान् अपि मगधप्रजासु अन्यतमः एव । अतः प्रजाभिः उपयुज्यमानं यं कमपि वेषं भवान् धरति चेदपि तत् वेषान्तरं न भवति । सामान्यकृषिकः इव वेषं धृतवता भवता ज्वरेण पीड्यमानः कश्चित् दरिद्रः दृष्टः । भवान् आत्मानं सामान्यकृषिकं मन्यमानः तस्य दरिद्रस्य औषधोपचारं कृतवान् । तदेव यदि भवान् राजा सन् तस्य दरिद्रस्य विषये चिन्तितवान् स्यात्, तर्हि सर्वेषां दरिद्राणां योगक्षेमं चिन्तयन् सर्वेषाम् अपि दरिद्राणां समस्यापरिहारम् अकरिष्यत्" इति ।

तदा चित्रसेनः उक्तवान् - "इदानीं स्वकीयः दोषः मया अवगतः । इतःपरं प्रजानां योगक्षेमं मनसि निधाय एव समस्यानां परिहारं करिष्यामि" इति ।

वेतालः एव कथां समाप्य अवदत् - "राजन् ! राज्यपरिपालनं परित्यज्य विलासजीवनं यापयन् आसीत् चित्रसेनः । तादृशस्य राज्ञः स्वभावे परिवर्तनम् अभवत् इति अंशः तु प्रशंसार्हः एव । किन्तु एतदर्थं जनकसेनेन कृतः वार्तालापः तु

वाक्चातुर्येण एव। किन्तु तस्य वचनं परस्परं विरुद्धम् इत्यपि भासते। यः कोऽपि राजा भवतु, सः तस्य देशस्य प्रजासु अन्यतमः भवत्येव। एवं सति तेन राज्ञा वेषान्तरं ध्रियते चेदपि तत् वेषान्तरं न इति जनकसेनेन यत् कथितं, तत् अर्थहीनं खलु ? जनकसेनस्य वचनानुसारं प्रजासु अन्यतमेन इव वेषः न धरणीयः इति चेत् राज्ञा राक्षसः इव, देवता इव वा वेषान्तरं धरणीयं भवेत्। अपि च जनकसेनेन चित्रसेनम् उद्दिश्य पूर्वम् उक्तम् आसीत् यत् – भवान् यदा वेषान्तरं धृतवान् भवति, तदा अहम् आगत्य भवन्तं द्रक्ष्यामि इति। एतत् उपहासजनकम् खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् – ''जनकसेनः कश्चित् राजर्षिः। सः स्वचिन्तनानुसारम् एव वार्तालापं कृतवान् चित्रसेनेन सह। अत्र वाक्चातुर्यं विरोधभावः वा नास्ति इति तु एतेन स्पष्टं भवति। जनकसेनः चित्रसेनम् एवं बोधितवान् – देशे भिन्नस्वभावयुताः प्रजाः भवन्ति। तासु प्रजासु यः राज्यपालने समर्थः, सः महाराजपदवीं प्राप्नोति। तन्नाम कश्चित् प्रजासेवार्थं यं वेषं धरति, सः एव राजवेषः। अतः एव जनकसेनः चित्रसेनम् उक्तवान् आसीत् – भवान् यदा वेषान्तरं धृतवान् भवति, तदा आगत्य भवन्तं द्रक्ष्यामि इति। तदनुसारं जनकसेनः कदाचित् आगतवान्। तस्मिन् समये चित्रसेनः नृत्यगानेषु लीनः आसीत्। एतत् दृष्टवान् जनकसेनः 'राज्ञा सता चित्रसेनेन प्रजाहितम् एव द्रष्टव्यं, न तु विलासजीवनं यापनीयम्' इति सूक्ष्मतया बोधितवान्। विवेकी सकृद्ग्राही च चित्रसेनः जनकसेनस्य कथनस्य तात्पर्यम् अवगत्य 'मम दोषः मया अवगतः' इति उक्तवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः तत् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# प्रत्यग्राणि वस्तूनि

कदाचित् सायङ्कालसमये कलस-ग्रामस्थः लिपिकारः कान्तराजः अन्ये च केचन ग्रामप्रमुखाः, ग्रामस्थायां वितर्दिकायाम् उपविश्य जल्पनं कुर्वन्तः आसन् । तस्मिन् समये पार्श्वग्रामात् तत्र आगतः कश्चित् कान्तराजं नमस्कृतवान् । कान्तराजः तं दृष्ट्वा मन्दहासं प्रकटितवान् । यः आगतः, सः कान्तराजस्य स्नुषायाः मातृगृहस्य कर्मकरः वीरेशः आसीत् ।

कान्तराजः वीरेशं पृष्टवान् - ''किं भोः ! कः विशेषः ?'' इति ।

तदा वीरेशः उक्तवान् - ''श्रीमन् ! शुभवार्ता अस्ति । भवतः पौत्रः जातः अस्ति'' इति ।

एतत् श्रुत्वा कान्तराजः महता सन्तोषेण वीरेशाय एकं रूप्यकं दत्त्वा उक्तवान् - ''भवान् इदानीम् एव मम गृहं गत्वा एकं बृहत् कण्डोलं स्वीकृत्य नागेशस्य मिष्टकापणम् आगच्छतु । अहम् अपि तम् आपणम् आगमिष्यामि'' इति ।

वंशोद्धारकः पौत्रः जातः इत्यतः अतीव सन्तुष्टस्य कान्तराजस्य आशयः आसीत् - अस्मिन् शुभसन्दर्भे सर्वेभ्यः मधुरवितरणं करणीयम् इति । अतः सः ततः नागेशस्य आपणं गतवान् ।

नागेशः कान्तराजं दृष्ट्वा सन्तोषेण - ''आगच्छतु ! भवतः अत्र आगमनं महते सन्तोषाय । किन्तु भवान् सामान्यतः मम आपणं न आगच्छति खलु !'' इति उक्तवान् ।

तदा कान्तराजः - ''इदानीम् आगन्तव्यम् आपतितम् । मह्यं शतम् उत्तमानि लड्डुकानि, मैसूरुपाकानां खण्डानां शतं च आवश्यकानि । सर्वमपि प्रत्यग्रं स्यात्, तादृशानि खाद्यानि सन्ति वा ?'' इति पृष्टवान् ।

एतत् श्रुत्वा नागेशः उक्तवान् - ''आम् !

सर्वम् अपि उत्तमम् एव अस्ति । निर्माणस्य अनुक्षणम् एव विक्रयणं प्रचलति अत्र । अतः पुरातन-खाद्यानि मम आपणे न भवन्ति एव'' इति ।

तदा कान्तराजः आश्चर्येण उक्तवान् - ''भवता उक्तं युक्तम् एव । किन्तु तान् मैसूरुपाकखण्डान् दुर्गभित्तिः इव व्यवस्थितं स्थापितवान् अस्ति खलु भवान् ? लड्डुकानि अपि राशिरूपेण योजितवान् अस्ति खलु ! एतत् बहुकष्टसाध्यं स्यात् खलु !'' इति ।

''आम् ! श्रीमन् ! एतत् अतीव कष्टसाध्यम् एव कार्यम्'' इति उक्तवान् नागेशः ।

''एवं तर्हि भवान् एकाकी एतावन्ति कार्याणि कथं निर्वहति ?'' इति पृष्टवान् कान्तराजः ।

तदा नागेशः उक्तवान् - ''महता कष्टेन निर्वहामि श्रीमन् । मैसूरुपाकखण्डानां लड्डूकानां च निर्माणार्थम् एव दिनद्वयम् आवश्यकम् अभवत् । पुनरपि तेषां समानाकारकेण कर्तनार्थं च एकं दिनम् आवश्यकम् अभवत्'' इति ।

तदा कान्तराजः लड्डुकानि एव परीक्षापूर्वकं पश्यन् - ''आम् ! पूर्वं न ज्ञातवान् अहं भवतः श्रमम् । किन्तु इदानीं ज्ञायमानम् अस्ति'' इति उक्तवान् ।

एतत् श्रुत्वा नागेशः पुनः उक्तवान् - ''श्रीमन् ! एतावता एव मम कार्यं न समाप्तम् । एतेषां खाद्यानां व्यवस्थितं स्थापनार्थं दिनत्रयस्य आवश्यकता अभवत्'' इति ।

तावता कण्डोलं गृहीत्वा वीरेशः तत्र आगतवान् । वीरेशं दृष्ट्वा नागेशः सन्तोषेण - ''तं कण्डोलं ददातु । खाद्यानि पूरयामि तत्र'' इति वदन् हस्तं प्रसारितवान् ।

तदा कान्तराजः - ''एतानि खाद्यानि क्रेतुं न इच्छामि नागेश ! अहं प्रत्यग्राणि मिष्टकानि क्रेतुं गच्छन् अस्मि'' इति वदन् वीरेशेन सह ततः प्रस्थितः ।

कान्तराजेन सह वार्तालापसन्दर्भे अकस्मात् वास्तविकः विषयः प्रकटितः अभवत् इति विलम्बेन ज्ञातं नागेशेन ।



## प्रपुन्नाडः



अस्माकं देशस्य सुन्दरेषु वृक्षेषु प्रपुन्नाडः अपि अन्यतमः प्रमुखः च । एषः वृक्षः गुच्छाकारकैः पुष्पैः युक्तः यदा भवति, तदा वृक्षे पर्णानि एव न भवन्ति । एषः वृक्षः युरोप्देशस्य लेबर्नम्जातीयः चेदपि तदपेक्षया एतस्य पुष्पाणि बृहदाकारकाणि (३०-४० से.मी.) सुन्दरतमानि च । फेब्रवरी-मार्चमासयोः एतस्य वृक्षस्य पर्णानि पतन्ति । अनन्तरं वृक्षशाखासु पुष्पाणि विकसितानि भवन्ति । एप्रिल्-मे-मासयोः पर्णानि पुनरपि पल्लवितानि भवन्ति । सामान्यतः १५०० मीटर् उन्नतेषु प्रदेशेषु एते वृक्षाः अधिकतया दृश्यन्ते । एते १२-१५ मी. उन्नतं वर्धन्ते । एतस्य शाखाः वृक्षं परितः प्रसृताः सत्यः दर्शनेन वितानम् इव भासन्ते । हरितवर्णयुतानि एतस्य पर्णानि १०-१२ से.मी. दीर्घाणि ४ - ५ से.मी. विशालानि च भवन्ति ।

कृष्णवर्णीयानि ३० - १०० से.मी. दीर्घयुतानि एतस्य शताधिकानि फलानि वृक्षे लम्बमानानि भवन्ति । फलानाम् अन्तर्भागे ४० - १०० विभागाः भवन्ति । तेषु एकैकस्मिन् विभागे अपि अण्डाकारकाणि बीजानि भवन्ति । बीजानां पार्श्वभागेषु उपसेचनसदृशः मधुरद्रवः भवति । एषः द्रवः विरेचकौषध-निर्माणार्थम् उपयुज्यते । एतं द्रवं वानराः अतीव इच्छन्ति । अतः एव एषः वृक्षः हिन्दीभाषया 'बन्दर्-लाठी' इत्युच्यते ।

प्रपुन्नाडः सस्यशास्त्रे 'कासिया पिस्टुला' इत्युच्यते । हिन्दीभाषया बङ्गालीभाषया च 'अमल्तास्' इति, मराठीभाषया 'भावा' इति, तमिळुभाषया मलयालभाषया च 'कोन्ने' इति च उच्यते । केरलेषु प्रपुन्नाडपुष्पाणि एप्रिल्मासे प्रवर्तमानस्य 'विषुक्कनि' उत्सवस्य निमित्तम् उपयुज्यन्ते ।

देहली-कलकत्ता-मुम्बयी-मदरास्नगरेषु मार्गाणां पार्श्वद्वये अपि एते वृक्षाः आरोप्यमाणाः सन्ति । मुम्बयीनगरे 'लेबर्नम्' मार्गः इत्येव कश्चन मार्गः अस्ति इति तु विशेषः ।



# प्राचीनतमः नाटककर्ता

# भासः

बहुभ्यः वर्षेभ्यः पूर्वम् एव रचितं रामायणं महाभारतं च बहुप्रकारेण पाठान्तरं प्राप्य अपि अद्यापि पठितृषु रसानुभवं जनयतः । न केवलं तावत्, रामायणस्य महाभारतस्य च कथायाः आधारेण विविधासु भारतीयभाषासु बहूनि काव्यानि रचितानि सन्ति । अनेकानि नाटकानि च रचितानि सन्ति । संस्कृतक्षेत्रे प्राचीनतमः नाटककर्ता भासः अपि रामायण-महाभारतयोः आधारेण बहूनि नाटकानि रचितवान् अस्ति ।

प्रसिद्धस्य नाटककर्तुः भासस्य जीवनविषये कोऽपि अंशः न उपलभ्यते । महाकविना कालिदासेन भासविषये महान् आदरः दर्शितः इत्यतः बहुभ्यः शतकेभ्यः पूर्वम् एव इतिहासकाराः कवयः च भासं श्रेष्ठं मन्यन्ते स्म इति ज्ञायते । अन्ये केचन ग्रन्थाः भासं, तेन रचितं प्रसिद्धं 'स्वप्नवासवदत्तं' च वर्णयन्ति । किन्तु सामान्यतः क्रि.श. १९१२ वर्षपर्यन्तम् अपि एतत् नाटकं केनापि न पठितम् आसीत् ।

१९१२ तमे वर्षे गणपतिशास्त्रिनामकः कश्चित् प्रसिद्धः पण्डितः केरलेषु कांश्चन ताडग्रन्थान् अन्विष्टवान् । तदा स्वप्नवासवदत्तं प्राप्तम् । तेन सह इतराणि द्वादश नाटकानि अपि उपलब्धानि अभवन् । तेषां नाटकानां रचनाशैल्याः परिशीलनेन पण्डिताः विमर्शकाः च निर्णयं कृतवन्तः यत् -तेषां सर्वेषाम् अपि नाटकानां कर्ता एकः एव इति । स्वप्नवासवदत्तस्य रचयिता भासः इति सर्वैः अपि ज्ञातः एव विषयः । अतः अन्यानि अपि नाटकानि तेन एव रचितानि स्युः इति विमर्शकानाम् अभिप्रायः ।

भासः क्रि.पू. ४-५ शतके जीवितवान् स्यात् इति ऊह्यते । तस्मिन् काले अस्माकं देशे संस्कृतभाषा राजादरं प्राप्तवती आसीत् । अतः संस्कृतनाटककर्तुः भासस्य मूलस्थानं (जन्मस्थानं) न ज्ञायते । भासनाटकानि देशे सर्वत्र प्रसिद्धिं गतानि । पूर्वं ताडग्रन्थाः देवालये सुरक्षितं स्थाप्यन्ते स्म । उत्तरभारते अत्यधिकानां देवालयानाम् आक्रमणं भवति स्म इति कारणतः तेषु दिनेषु ताडग्रन्थाः अपि नष्टाः स्युः, तस्मात् एव भासनाटकानां प्रतिकृतयः अदृश्यतां गताः स्युः इति पण्डिताः अभिप्रयन्ति ।

कस्याश्चित् पुराणकथायाः आधारेण रचितस्य 'स्वप्नवासवदत्त' नाटकस्य कथा संक्षेपेण एवम् अस्ति -

वत्सदेशस्य युवराजः उदयनः उज्जयिन्याः सौन्दर्यवतीं राजकुमारीं वासवदत्तां परिणयति। विवाहानन्तरम् उदयनः भोगलोलुपः सन्, राजकार्येषु उपेक्षां कुर्वन् स्वदायित्वं विस्मृत्य आनन्देन कालं यापयति। एतस्मात् राज्यपरिपालनम् अव्यवस्थितं भवति। अधिकारिणः अपि स्वकर्तव्यात् विमुखाः भवन्ति।

एतम् एव सुसमयं प्रतीक्षमाणः शत्रुराजः अकस्मात् उदयनस्य राज्यस्य उपरि आक्रमणं कृत्वा तदीयम् अर्धराज्यं स्वायत्तीकरोति।

राज्ञ्याः वासवदत्तातः उदयनः दूरं नीतः चेत् राजा उदयनः विवेकेन व्यवहरेत्, सन्मार्गं च आश्रयेत् इति चिन्तयति मन्त्री। तदर्थं मन्त्री उपायं चिन्तयति। उपायानुसारं मन्त्री वार्तां प्रकटयति यत् - महाराज्ञी वासवदत्ता कार्यार्थं बहिः यदा गतवती आसीत्, तदा सा अग्नेः आहुतिः जाता इति। एतत् श्रुत्वा राजा उदयनः अतीव दुःखितः भवति चेदपि केषुचित् एव दिनेषु आत्मानं निगृह्य राजकार्येषु मनः केन्द्रीकरोति। सः शत्रुराजेन आक्रान्तं स्वभूभागं पुनरपि स्वाधीनीकरोति, राज्यपरिपालनं व्यवस्थितं करोति च।

उदयनः कदाचित् निद्रासमये वासवदत्तां पश्यति। झटिति उत्थाय नेत्रे निमीलितवतः उदयनस्य पुरतः एव दृष्टिगोचरीभवति वासवदत्ता। सः क्षणं यावत् आत्मना दृश्यमानः स्वप्नः इत्येव भावयति। किन्तु अनन्तरं सा वस्तुतः वासवदत्ता एव इति ज्ञात्वा उदयनः अतीव सन्तुष्टः भवति। अपि च सः 'स्वकर्तव्यस्य स्मारणार्थम् एव मन्त्री एवम् उपायं कृतवान्' इति ज्ञात्वा अतीव सन्तुष्टः भवति।

अन्ते उदयनवासवदत्तयोः सङ्गमः भवति।



# भवन्तः जानन्ति वा ?

१. गौरीशङ्कर(एवरेस्ट्)शिखरं प्रथमं केन कदा आरूढम् ?
२. सः कः, यश्च क्रि.श. प्रथमशतके अस्माकं देशम् आगत्य बहून् भारतीयान् क्रैस्तमतीयान् कारयित्वा अत्रैव मरणं प्राप्तवान् ?
३. अस्माकं देशस्य उच्चन्यायालयस्य न्यायाधिपतिपदवीं प्राप्तवती प्रथमा महिला का ?
४. व्याघ्रः अस्माकं राष्ट्रियमृगः इति कदा प्रकटितम् अभवत् ?
५. उद्वङ्कनयन्त्रं कदा केन संशोधितम् ?
६. सप्त समुद्राः के ?
७. चण्डीगडस्य 'राक्गार्डन्' केन निर्मितम् ?
८. १८०४ तमे वर्षे नेपोलियन्वर्यः फ्रेञ्चचक्रवर्ती जातः। तस्मिन् एव वर्षे सञ्चारक्षेत्रे काचित् महती घटना प्रवृत्ता। सा घटना का ?
९. पुत्र्याः व्यवहारः सम्प्रदायबद्धः न आसीत् इति कारणतः औरङ्गजेबः पुत्रीं विंशतिं वर्षाणि यावत् कारागृहे स्थापितवान् आसीत्। तस्याः नाम किम् ?
१०. रशियन्भाषा कया लिप्या लिख्यते ?

संयुक्तराष्ट्रसङ्घस्य प्रथमः प्रधानकार्यदर्शी (जनवरी ९५ चन्दमामा) नार्वेदेशीयः ट्रिग्विलिवर्यः (१९४६ तः), द्वितीयः स्वीडन्देशस्य ड्याग् ह्यूमर्सक्-जोल्ड् (१९५३), तृतीयः बर्मादेशीयः यूथाण्ट् (१९६१), चतुर्थः आस्ट्रियादेशीयः कर्टवाल्ड् हीम् (१९७२), पञ्चमः पेरुदेशीयः जेवियर् पेरेज् डि क्यूलर् (१९८२), १९९२ तः इजिप्ट्देशीयः बूट्रोस्घाली।

## उत्तराणि

१. भारतीयेन तेनसिङ्ग् नार्गेवर्येण, न्यूजिलेण्ड्देशीयेन सर् एड्मण्ड् हिल्लरिवर्येण च। १९५३ तमे वर्षे।
२. एसुक्रिस्तस्य द्वादशशिष्येषु अन्यतमः सैण्ट् थामस्।
३. केरलीया न्यायाधीशा फातिमा बीबी।
४. १९७२ तमे वर्षे।
५. १८६७ तमे वर्षे। अमेरिकादेशीयैः षाल्स्-गिड्डान्-सोलेवर्यैः।
६. पेसिफिक्महासमुद्रः; अट्लाण्टिक् महासमुद्रः; आर्क्टिक्महासुमुद्रः; दक्षिणमहासुमद्रः हिन्दूमहासमुद्रः, अरेबियासमुद्रः, बङ्गालकोल्लि।
७. नेक्चन्द्वर्येण।
८. आर्. ट्रिवितिक्वर्यः बाष्पेण सञ्चरणं कुर्वन्तं धूमशकटं लोकाय अर्पितवान्।
९. जेबुन्नीसा।
१०. क्रैलिक्लिप्या।



# स्वार्थमनोभावः

मलयपुरनामके राज्ये रामनाथ-नामकः महान् अर्थशास्त्रज्ञः आसीत् । तस्य राज्यस्य राजा बहुषु सन्दर्भेषु रामनाथस्य सूचनाः पालयति स्म इति कारणतः तस्मिन् राज्ये दारिद्र्यम् एव न आसीत्, अपि तु आर्थिकी स्थितिः उत्तमा एव आसीत् ।

इन्द्रपुरं मलयपुरस्य प्रतिवेशिराज्यम् । इन्द्रपुरस्य राजा आर्थिकसमस्यायाः निवारणार्थं बहुधा प्रयत्नं कृतवान् । तथापि तस्य राज्ये जनानां महत् दारिद्र्यम् आसीत् । मलयपुरे आर्थिकसमस्यायाः निवारणार्थं ये उपायाः व्यवहारपथे आनीयन्ते स्म, तान् उपायान् ज्ञात्वा इन्द्रपुरस्य राजा स्वराज्ये प्रयुङ्क्ते स्म । तथापि किमपि प्रयोजनं न जातम् आसीत् ।

एषः विषयः रामनाथेन ज्ञातः । स्वराज्ये आर्थिकसमस्यानिवारणार्थं कृताः यत्नाः पार्श्वराज्ये इन्द्रपुरे किमर्थं विफलाः भवन्ति इति ज्ञातुम् इच्छन् रामनाथः इन्द्रपुरं प्रति प्रस्थितः । इन्द्रपुरे रामनाथस्य बान्धवाः केचन आसन् इति कारणतः बन्धुगृहगमनव्याजेन रामनाथः इन्द्रपुरं प्रति प्रस्थितवान् ।

इन्द्रपुर-मलयपुरयोः मध्ये किञ्चन अरण्यम् अस्ति । रामनाथः अरण्यमार्गेण प्रयाणं कुर्वन् किञ्चिद्दूरं गतवान् । तावता श्रान्तः सः विश्रान्त्यर्थं कस्यचित् वृक्षस्य अधः उपविष्टवान् । तावता कश्चन पिशाचः वृक्षात् अधः आगतवान् ।

रामनाथेन इतःपूर्वं पिशाचः न दृष्टः आसीत् । अतः धैर्यशालिनः अपि तस्य शरीरे कम्पनम् आरब्धम् । एतत् ज्ञात्वा पिशाचः - ''भोः ! मां दृष्ट्वा भीतः मा भवतु भवान् । अहम् इन्द्रपुरस्थः कश्चन महान् धनिकः । अहं पूर्वं कस्मिंश्चित् ग्रामे निवसामि स्म इति



कारणतः मम धनिकताविषये कोऽपि न जानाति । मया सम्पादितं धनं सर्व कुत्रचित् रहस्येन स्थापितवान् अस्मि । एतं विषयं मम बान्धवाः अपि न जानन्ति । मम दुराशाकारणतः एषा सम्पत्तिः कस्यापि उपयोगाय न अभवत् खलु ! अतः एव अहं मरणानन्तरं पिशाचः जातः अस्मि । उत्तमकार्यार्थम् एतस्य धनस्य विनियोगः क्रियते चेत् अहम् एतस्मात् पिशाचरूपात् मुक्तिं प्राप्स्यामि । भवान् अर्थशास्त्रज्ञः पण्डितः रामनाथः इति अहं जानामि । पिशाचरूपात् मुक्तिप्राप्त्यर्थं कृपया मम साहाय्यं करोतु'' इति वदन् रामनाथं नमस्कृतवान् ।

तदा रामनाथः धैर्येण उक्तवान् - ''भवान् चिन्तां मा करोतु । भवदीयं धनं इन्द्रपुरस्य महाराजं प्रापयामि अहम् । राजा तेन धनेन जनहितकार्याणि करिष्यति'' इति ।

एतत् श्रुत्वा पिशाचः उक्तवान् - ''भवान् न जानाति यत् - अस्माकं राजा प्रजानां हितापेक्षया स्वविलासजीवनम् एव प्रमुखं मन्यते इति । अतः सः राजा मदीयं धनं प्राप्नोति चेत्, तस्य विलासः वर्धते एव । एवंप्रकारेण मदीयस्य धनस्य दुर्विनियोगः भवति चेत् अहं पिशाचरूपात् मुक्तः न भविष्यामि'' इति ।

तदा रामनाथः उक्तवान् - ''एवं तर्हि भवतः राज्ये स्थिताभ्यः सेवासंस्थाभ्यः भवदीयं धनं दास्यामि अहम् । एषः विषयः महाराजेन अपि ज्ञातः भविष्यति । धनम् अपि प्रजाहितार्थम् एव व्ययितं भविष्यति'' इति ।

''हा ! हन्त ! भवान् अस्माकं राज्यस्य सेवासंस्थानां विषयं न जानाति इति भाति । अस्माकं राज्यस्थाः सेवासंस्थाः अतीव भ्रष्टाचारम् आचरन्ति । अतः ताभ्यः धनं दीयते चेत्, तत् धनं सर्वथा प्रजाहितार्थं व्ययितं न भविष्यति'' इति उक्तवान् पिशाचः ।

मरणानन्तरं पिशाचजन्म प्राप्य अपि स्वधनं परोपकारार्थम् एव व्ययितं भवेत् इति पिशाचस्य आग्रहं दृष्ट्वा रामनाथः आश्चर्यचकितः । यतः 'इन्द्रपुरजनाः यदि एतादृशाः संस्कारवन्तः स्युः, तर्हि तत्र दारिद्र्यं कथं वा स्यात्' इति चिन्तयन्

रामनाथः पिशाचम् उद्दिश्य - ''मम तु मम महाराजविषये विश्वासः अस्ति । अस्माकं राज्यस्य सेवासंस्थानां विषये अपि विश्वासः अस्ति । किन्तु भवतः राज्यस्य परिस्थितिः एव अन्या अस्ति । कस्मिन् अपि भवतः विश्वासः नास्ति । भवान् स्वधनस्य सद्विनियोगविषये भवतः राज्यस्य पण्डितान् प्रष्टुम् अशक्ष्यत् खलु !'' इति पृष्टवान् ।

तदा पिशाचः उक्तवान् - ''अस्माकं राज्ये पण्डितानां महती धनाशा । यं कमपि साहाय्यं पृच्छामः चेत् धनाशया एव ते अग्रे आगच्छन्ति । तादृशेषु पण्डितेषु मम विश्वासः नास्ति इति कारणतः एव भवादृशं निस्स्वार्थिनं प्रतीक्षमाणः आसम् अहम्'' इति ।



एतत् श्रुत्वा रामनाथः पिशाचस्य साहाय्यं कर्तुम् इच्छन् तम् अपि आत्मना सह नीतवान् । पिशाचः अगोचररूपेण रामनाथेन सह इन्द्रपुरं प्राप्तवान् । पिशाचस्य सूचनानुसारं रामनाथः कस्याञ्चित् धर्मशालायां स्थितवान् ।

सा धर्मशाला इन्द्रपुरस्थेन केनचित् ग्रामीणेन धनसेननामकेन निर्मिता । वणिक् धनसेनः दानधर्मादिषु पुण्यकार्येषु च प्रवृत्तिं प्रदर्शयन् प्रसिद्धिं प्राप्तवान् आसीत् ।

रामनाथः पिशाचम् उक्तवान् - ''धनसेनस्य पूर्वजाः त्रिपुरदेशीयाः । नीतिनियमादीन् अनुसृत्य एव वाणिज्यकरणम् एतत्कुटुम्बीयानां सम्प्रदायः । अतः एव एते बहुषु नगरेषु वाणिज्यं कुर्वन्तः ख्यातिं प्राप्तवन्तः । धनसेनस्य अनुजः गुणसेनः अस्माकं महाराजेन प्रजाभिः च बहुधा सत्कृतः अस्ति । गुणसेनः अस्माकं राज्ये देवालयद्वयम्, अष्ट धर्मशालाः, चतुरः चिकित्सालयान् च निर्माय तेषां पोषणं कुर्वन् अस्ति । धनसेनस्य प्रामाणिकताविषये अपि मम विश्वासः अस्ति । अतः भवदीयां सम्पत्तिं धनसेनाय ददातु'' इति ।

तदा पिशाचः उक्तवान् - ''भवता उक्तं युक्तम् एव । किन्तु महतीं सम्पत्तिम् अन्यदेशीयाय दानापेक्षया अस्माकं देशीयाय एव दत्ता चेत् मम तृप्तिः'' इति ।

अत्रान्तरे कश्चित् दरिद्रः



रामनाथसमीपम् आगत्य तम् उक्तवान् - ''स्वामिन् ! दर्शनेन भवान् विदेशीयः इति भाति। अतः एव निस्सङ्कोचं धैर्येण च पृच्छन् अस्मि। मदीयं गृहं जीर्णं जातम् अस्ति। मम माता अनारोग्यपीडिता अस्ति। अतः कृपया यथाशक्ति धनसाहाय्यं करोतु भवान्। अहं चत्वारिंशद्वर्षेभ्यः अस्मिन् नगरे वासं कुर्वन् अस्मि । किन्तु कोऽपि मम साहाय्यं न कृतवान्। एतद्देशीयाः सर्वे अपि स्वार्थिनः'' इति।

दरिद्रस्य वचनं श्रुत्वा रामनाथः तस्मै दरिद्राय एकं रूप्यकं यच्छन् - ''ये भवतः साहाय्यं न कुर्वन्ति, ते सर्वे स्वार्थपराः इति कथनं न उचितम् । विदेशीयानां पुरतः स्वदेशीयानाम् अपमाननं स्वापमान-तुल्यम् । एतद्विषये यदि भवान् विवेकेन व्यवहरति, तर्हि भवतः कष्टानि अपगतानि भवन्ति'' इत्युक्त्वा तं प्रेषितवान्।

अनन्तरं रामनाथः पिशाचम् उक्तवान् - ''एतस्मै दरिद्राय भवदीयं धनं दत्तं चेत् सद्विनियोगः भवेत्'' इति। तदा पिशाचः उक्तवान् - ''तस्य दरिद्रस्य धनस्य आवश्यकता अस्ति इति तु सत्यम्। किन्तु मदीयं धनं मम ग्रामीणाय एव दत्तं चेत् वरं खलु !'' इति।

धर्मशालायां किञ्चित्कालं विश्रान्तिं स्वीकृत्य रामनाथः पिशाचेन सह प्रस्थितः। मध्येमार्गं कश्चित् राजभटः मिलितवान्। रामनाथः राजभटेन सह वार्तालापं कृत्वा ज्ञातवान् यत् - सः राजभटः पिशाचस्य ग्रामीणः इति, सः जीवने महत् कष्टम् अनुभवन् अस्ति इति च।

रामनाथस्य आशयं ज्ञात्वा पिशाचः उक्तवान् - ''अस्माकं ग्रामीणेषु अपि अस्माकं वीथीजनः लब्धः चेत् तस्मै धनं दास्यामि'' इति।

तावता रामनाथः पिशाचस्य आशयं सम्यक् अवगतवान्। अतः सः अनुक्षणं पिशाचम् उक्तवान् - ''भवतः वीथीजनाय दानस्य अपेक्षया अपि भवतः गृहसदस्याय धनं दत्तं चेत् उत्तमं खलु ! तेन भवतः अपि तृप्तिः । अतः भवतः गृहम् एव गच्छाव'' इति।

अनन्तरम् उभौ अपि पिशाचस्य ग्रामं गत्वा तत्र दिवङ्गतस्य धनिकस्य गृहं

गतवन्तौ । तस्मिन् गृहे जनाः त्वरया इतस्ततः अटन्तः आसन्।

एतत् दृष्टवान् पिशाचः रामनाथम् उक्तवान् - "अहम् इदानीं स्मृतवान् यत् - अद्य मम जन्मदिनम् इति। मम जीवितकाले मम जन्मदिने गृहे विशेषकार्यक्रमः भवति स्म । मम पत्नीपुत्राः मम कण्ठे पुष्पमालास्थापनपूर्वकं मां गौरवेण सत्कुर्वन्ति स्म। मम निमित्तं गायकान् आहूय गापयन्ति स्म" इति।

तावता रामनाथः तस्य गृहं प्रविश्य उक्तवान् - "दिवङ्गतस्य गृहस्वामिनः जन्मदिने एतावता वैभवेन कार्यक्रमम् आचरन्तः भवन्तः एव धन्याः" इति।

रामनाथस्य एतत् वचनं श्रुत्वा काचित् विधवा, तस्याः पुत्राः स्नुषाः च आश्चर्येण रामनाथं दृष्टवन्तः। क्षणकालानन्तरं तस्य वचनस्य भावं ज्ञात्वा विधवा उक्तवती - "हाँ ! मम पत्युः विषये वदन् अस्ति किल भवान् ! सः स्वजीवितकाले सदा अनुशासनविषये दुराग्रहं कुर्वन् सर्वदा अस्माकम् असन्तोषम् एव जनयति स्म। अतः तस्य मरणात् इदानीं वयं सुखिनः । विंशति-एकर्‌परिमिता भूमिः अस्ति अस्माकम्। अतः अस्माकं जीवननिर्वहणे तु क्लेशः नास्ति। सम्पादितेन धनेन सप्ताहे एकं दिनं वयं सन्तोषेण कालं यापयितुम् इच्छन्तः एतादृशकार्यक्रमं कुर्मः" इति।

"एवं तर्हि भवन्तः मृतं स्वामिनं कदापि न स्मरन्ति वा ?" इति पृष्टवान् रामनाथः।

तदा सा विधवा खेदेन एव उक्तवती - "अवश्यं स्मरामः। तस्य मरणम् इतोऽपि





एतत् श्रुत्वा पिशाचः क्षणकालम् अपि तत्र स्थातुम् अनिच्छन् रामनाथम् उक्तवान् - "शीघ्रम् इतः निर्गच्छाव" इति।

रामनाथः पिशाचेन सह ततः प्रस्थितवान्। मध्येमार्गं पिशाचः रामनाथम् उक्तवान् - "अहं द्वितीयविवाहकरणेन मम ज्येष्ठपुत्रस्य अन्याय्यं कृतवान्। अतः इदानीं तं दृष्ट्वा मद्विषयं वदतु भवान्" इति।

रामनाथः पिशाचस्य ज्येष्ठपुत्रविषये कांश्चन जनान् विचारितवान्। तेषु कश्चित् वृद्धः उक्तवान् - "सः अलसः कुत्रापि अटन् भवति। यदि विमाता सम्यक् न पोषयति, तर्हि ग्रामीणाः वयं वा साहाय्यं करवाम इति चिन्तयित्वा तस्य साहाय्यार्थम् उद्युक्ताः आस्म। परिश्रमेण सम्पाद्य जीवनं यापयतु इति हितवचनम् अपि बोधितम् अस्माभिः। किन्तु सः कस्यापि वचनं न श्रुतवान्। पितुः मरणानन्तरं मनः सम्यक् नास्ति इति व्याजं वदन् सुरापानम् आरब्धवान्। इदानीं प्रायशः सः सुरां पीत्वा पुरतः दृश्यमानायां वाटिकायां सुप्तवान् स्यात्" इति।

रामनाथः वाटिकां गत्वा धनिकपुत्रम् उत्थाप्य तस्य परिस्थितिं विचारितवान्। तस्य उत्तररूपेण धनिकपुत्रः मातरं, पितरं, सहोदरान्, ग्रामीणान् देवं च निन्दितवान्।

तदा रामनाथः - "भवतः पिता प्रभूतं धनं सम्पाद्य कुत्रचित् रहस्येन स्थापितवान् अस्ति। तत् रहस्यम् अहं भवन्तं वदामि। तस्मात् प्राप्तेन धनेन भवान् किं करोति?" इति पृष्टवान्।

केभ्यश्चित् दिनेभ्यः पूर्वम् एव यदि जातं स्यात्, तर्हि वयम् इतोऽपि कानिचन दिनानि सन्तोषेण जीवितुम् अशक्ष्याम इति यदा यदा चिन्तयाम, तदा तदा तस्य स्मरणं कृतम् इव खलु! अपि च मम सपत्न्याः पुत्रः कश्चित् अस्ति। सः ग्रामे अटन् सुरां च पिबन् अन्यान् पीडयन् भवति। ते अस्माकं गृहम् आगत्य तस्य विषये आरोपं कुर्वन्ति। सपत्नीपुत्रस्य एतद्गृहस्य च सम्बन्धः सर्वथा नास्ति इति अस्माभिः उक्तं चेत् अपि जनाः न विश्वसन्ति। तादृशसन्दर्भे अपि मृतस्य स्मरणं कुर्वन्तः असमाधानं प्रकटयामः। मृतस्य स्मरणेन किमपि प्रयोजनं नास्ति इति भवान् अपि जानाति। किन्तु किं कुर्मः? परिस्थितिः तादृशी अस्ति" इति।

एतत् श्रुत्वा धनिकपुत्रः उक्तवान् - "विशालं गृहं क्रेष्यामि । गृहकार्यार्थं कर्मकरान् नियोजयिष्यामि । यथेष्टं सुरां पिबन् सुखेन जीवनं यापयिष्यामि । एतावत्पर्यन्तं ये मां तिरस्कारेण दृष्टवन्तः तेषां विषये प्रतीकारं साधयिष्यामि । मालार्पणपूर्वकं मम पितुः भावचित्रं प्रतिदिनम् अपि पूजयिष्यामि" इति ।

एतत् श्रुत्वा पिशाचः अनुक्षणम् उक्तवान् - "रामनाथ! एषः एव मम सम्पत्तेः उत्तराधिकारी भवितुम् अर्हति । एतस्मात् अहं तृप्तिं प्राप्स्यामि । तदर्थं भवतः अपि अनुमतिः आवश्यकी" इति ।

रामनाथः पिशाचस्य वचनम् अङ्गीकृत्य तं विषयं धनिकपुत्रं निवेदितवान् । अपरक्षणे एव पिशाचः अदृश्यः जातः । रामनाथः ततः स्वराज्यं मलयपुरं गतवान् ।

रामनाथद्वारा प्रवृत्तं सर्वं श्रुत्वा तस्य पत्नी - "प्रयोजनं विना किमर्थम् इन्द्रपुरं गत्वा आगतवान् भवान् ? अयोग्याय सम्पत्तिदानेन अपि पिशाचः कथं मुक्तिं प्राप्तुं शक्तः अभवत् ?" इति पृष्टवती ।

तदा रामनाथः मन्दहासपूर्वकम् उक्तवान् - "इन्द्रपुरस्य राजा विलासप्रियः । सर्वत्र भ्रष्टाचारः प्रचलति । महाराजे वा सेवासंस्थादिषु वा जनानां विश्वासः नास्ति । जनाः अतीव ममकारवन्तः सन्ति । जनाः दुराशया प्रभूतं धनं सम्पादयन्तः अपि तस्य सद्विनियोगं न कुर्वन्ति । तस्मात् तेषां मरणानन्तरं ते पिशाचजन्म प्राप्नुवन्ति । तेषां सम्पत्तिः अयोग्यैः प्राप्ता भवति । स्वार्थभावनया आत्मना सम्पादितं धनम् अयोग्याय अपि पुत्राय मम द्वारा दापितवता पिशाचेन तृप्तिः प्राप्ता । तेन सः पिशाचरूपात् मुक्तिं प्राप्तवान्" इति ।

कालक्रमशः एषः विषयः सर्वैः जनैः अपि ज्ञातः । ततः इन्द्रपुरस्य राजा प्रजाः च एतं विषयं ज्ञात्वा, स्वराज्यस्य दुःस्थितेः मूलं कारणं ज्ञात्वा लज्जिताः अभवन् । अनन्तरं केषुचित् एव दिनेषु इन्द्रपुरे अपि मलयपुरे इव आर्थिकी स्थितिः उत्तमा जाता, प्रजाः च सुखेन जीवितवत्यः ।



# र स वा र्ताः



## रज्जुलङ्घने विक्रमः साधितः

२ २ वर्षीयः डा।। रामप्रसादः मद्रासनगरस्थः । सः नवेम्बर् २ १ दिनाङ्के पञ्चसु घण्टासु ४०, १ ८ १ वारं रज्जुलङ्घनं (स्किप्पिङ्ग्) कृत्वा 'गिन्निस्' पुस्तके स्थानं प्राप्तुं प्रयत्नं कृतवान् । एतादृशाः सामान्यतः प्रतिघण्टं पञ्च निमेषान् यावत् विश्रान्तिं स्वीकुर्वन्ति । किन्तु रामप्रसादः प्रतिघण्टं २० सेकेण्ड्स् केवलं विश्रान्तिं स्वीकृतवान् । डा।। रामप्रसादः वर्षद्वयात्पूर्वम् एकघण्टाभ्यन्तरे ३,५९० वारं उत्पतन-स्थिति-व्यवहारं कृतवान् । एषा वार्ता गिन्निस्पुस्तक-सम्बद्धेभ्यः दत्ता च।

किन्तु तावता एतस्य वर्षस्य गिन्निस्पुस्तकं प्रकाशितम् आसीत् । तस्मात् अस्मिन् वर्षे पूर्वमेव रामप्रसादः स्वविक्रमं साधारं गिन्निस्प्रचारकर्तॄन् सूचितवान् । डा।। रामप्रसादवर्येण एकघण्टाभ्यन्तरे ८५५६ वारं रज्जुलङ्घनं कृतम् इति यत्, सः विषयः 'लिङ्का' अधिकारिभिः प्रकटितः अस्ति । डा।। रामप्रसादः बालानां चिकित्साकरणे विशेषश्रद्धावान् अस्ति इति विषयः अत्र स्मरणीयः ।



## विक्रमसाधनार्थं प्रयत्नः

कोयमत्तूरुप्रदेशीयः एम्. पार्थसारथिनामकः व्यायामशिक्षकः सद्यः एव अन्यं कञ्चन विक्रमं साधितवान् अस्ति । सः प्रतिघण्टं पञ्च निमेषान् यावत् विश्रान्तिं स्वीकुर्वन् नवसु घण्टासु ८५०० वारं लङ्घनं कर्तुं समर्थः । तदर्थं च १६ कि.मी. परिमाणयुतः मार्गः आवश्यकः । लङ्घनसमये मार्गे अवरोधस्य निवारणार्थं अधिकारिणां साहाय्यम् अपि आवश्यकम् । पार्थसारथिः उत्तमः क्रीडापटुः, नियुद्धे परिश्रमवान् च । एकस्मात् वर्षात् एषः विक्रमं साधयितुं लङ्घनाभ्यासं कुर्वन् अस्ति । इतःपूर्वम् अमेरिकादेशीयः याष्रिटाफर्मन्वर्यः सार्धदशसु घण्टासु ८, ३४१ वारं लङ्घनं कृत्वा विक्रमं साधितवान् आसीत् ।

## एकादशवर्षाणि यावत् पादाभ्यां चलनम्



स्काट्लेण्ड्देशीयायाः फियोना-काम्प्बेल्वर्यायाः इदानीन्तनं वयः २७ वर्षाणि । एषा ब्रिटन्देशस्य उत्तर-भागस्थात् जान्ओग्रेट्- नामकस्वग्रामात् षोडशे वयसि प्रस्थिता । १,३६३ कि.मी. दुरं यावत् पादाभ्याम् एव गत्वा अन्यदिशायाः अन्तिमभूभागः प्राप्तव्यः इति एतस्याः आशयः । एवं तत्र अन्तिमभूभागं प्राप्य, ततः प्रतिनिवृत्तिं विना पञ्चसु खण्डेषु ११ वर्षपर्यन्तं ३१, ३३८ कि.मी. दूरं क्रमित्वा गतस्य अक्टोबर्मासस्य १४ दिनाङ्के स्वस्थानं प्राप्तवती अस्ति फियोना काम्प्बेल् । एषा आस्ट्रेलियामध्ये सिड्नितः पेर्तिपर्यन्तम्, अमेरिकादेशे न्यूयार्कतः लास् एञ्जल्स्पर्यन्तं च पादाभ्यां चलितवती अस्ति । आफ्रिकाखण्डे एकस्थानात् अपरस्थानं प्रति गमनार्थं वर्षद्वयम् आवश्यकम् अभवत् । इतःपरं पुनरपि यदि पादाभ्यां गम्यते, तर्हि एकाकिनी न गमिष्यामि, अपि तु अन्यं कञ्चित् नेष्यामि इति वदति काम्प्बेल् ।




हस्तिनापुरात् अनतिदूरे स्थिते अरण्ये हिरण्यधन्वनामकः व्याधराजः वसति स्म । तस्य पुत्रः एकलव्यः । 'आचार्यस्य द्रोणस्य सकाशात् बहवः राजकुमाराः धनुर्विद्यायाः अभ्यासं कुर्वन्तः सन्ति, केचन तु सुदूरात् अपि आगत्य शस्त्राभ्यासं कुर्वन्ति' इति वार्ता कदाचित् एकलव्यः श्रुतवान् ।

एकलव्यस्य मनसि विचारः आगतः यत् - अहम् अपि द्रोणाचार्यस्य सकाशात् शस्त्राभ्यासं करोमि इति । अतः सः कदाचित् द्रोणसमीपं गत्वा सविनयं नमस्कृत्य द्रोणम् उक्तवान् - "कृपया माम् अपि भवतः शिष्यत्वेन स्वीकरोतु इति । किन्तु एकलव्यः व्याधवंशीयः इति ज्ञात्वा द्रोणः एकलव्यस्य शिष्यत्वेन अङ्गीकरणं निराकृतवान् ।

अनन्तरम् एकलव्यः श्रद्धया द्रोणं नमस्कृत्य ततः स्ववासस्थानम् अरण्यं गतवान् । अरण्ये एकत्र द्रोणस्य प्रतिमाम् एकां निर्माय, तां प्रतिमाम् एव गुरुं मत्वा प्रतिमां नमस्कृतवान्, बाणप्रयोगस्य अभ्यासम् आरब्धवान् च । बहुकालपर्यन्तं कृतस्य बाणप्रयोगस्य अभ्यासस्य परिणामतः एकलव्यः धनुर्विद्यायां निपुणः सञ्जातः । तन्नाम सः धनुर्विद्यायां द्रोणस्य शिष्यान् अपि अतिशेते स्म ।

कदाचित् द्रोणशिष्याः मृगयार्थं तत् अरण्यं शुनकैः सह गतवन्तः, यत्र एकलव्यः निवसति स्म । कश्चित् शुनकः हरिणचर्मधारिणं मलिनशरीरिणं जटा-




धारिणम् एकलव्यं दृष्ट्वा भषणम् आरब्धवान् । एकलव्यः शुनकस्य भषणं श्रुत्वा, शुनकम् उद्दिश्य युगपत् एव सप्त बाणान् प्रयुक्तवान् । ते सप्त अपि बाणाः शुनकस्य मुखे संलग्नाः अभवन् । एतस्मात् सः शुनकः पूर्वापेक्षया उच्चस्वरेण भषन् ततः धावन् द्रोणशिष्याणां समीपं गतवान् ।

शुनकस्य मुखे संलग्नान् सप्त बाणान् दृष्ट्वा द्रोणशिष्याः – 'येन एते बाणाः प्रयुक्ताः, सः धनुर्विद्यानिपुणः स्यात् एव' इति चिन्तयन्तः तस्य अन्वेषणार्थम् अरण्यस्य अन्तः गतवन्तः । केषुचित् एव क्षणेषु तैः एकलव्यः दृष्टः । ते द्रोणशिष्याः एकलव्यं पृष्टवन्तः – ''भवान् कः ? कस्य पुत्रः भवान् ? भवतः गुरुश्च कः ?'' इति ।

तदा एकलव्यः उक्तवान् – ''अहं व्याधराजस्य पुत्रः अस्मि । मम नाम एकलव्यः । द्रोणाचार्यं मम गुरुं मत्वा अहम् अत्र धनुर्विद्यायाः अभ्यासं कुर्वन् अस्मि'' इति ।

एतत् श्रुत्वा द्रोणशिष्याः ततः हस्तिनापुरं प्रतिगत्य एकलव्यस्य विषयं द्रोणाचार्यं निवेदितवन्तः । एतत् श्रुत्वा अर्जुनस्य सन्देहः उत्पन्नः यत् – एकलव्यः ममापेक्षया अपि धनुर्विद्यायां निपुणः स्यात् वा इति । सः सन्देहेन एव गुरुं द्रोणम् उक्तवान् – ''भवादृशः श्रेष्ठः जगति एव यथा न स्यात् तथा शिक्षणं ददामि इति भवता उक्तम् आसीत् खलु ? किन्तु एकलव्यः मदपेक्षया श्रेष्ठः इति भाति खलु !'' इति ।

अर्जुनस्य वचनं श्रुत्वा द्रोणाचार्यः, अन्ये शिष्याः यथा न जानीयुः, तथा रहस्येन अर्जुनेन सह एकलव्यसमीपं गतवान् ।

एकलव्यः धनुर्विद्यायाः अभ्यासे एव लीनः आसीत् । आगतं द्रोणाचार्यं सादरं स्वागतीकृत्य सः सविनयम् उक्तवान् – ''अहं भवतः शिष्यः अस्मि'' इति ।

''यदि भवान् मम शिष्यः, तर्हि गुरुदक्षिणारूपेण मह्यं किं ददाति भवान् ?'' इति पृष्टवान् द्रोणः ।

''गुरुदक्षिणारूपेण दातुम् अशक्यम् इति किमपि नास्ति । भवान् यत् इच्छति, तत् दास्यामि अहम्'' इति उक्तवान् एकलव्यः ।

''एवं तर्हि भवतः दक्षिणहस्तस्य अङ्गुष्ठम् एव गुरुदक्षिणारूपेण ददातु'' इति उक्तवान्

द्रोणः ।

अपरक्षणे एव एकलव्यः स्वदक्षिणहस्तस्य अङ्गुष्ठं कर्तयित्वा द्रोणाय दत्तवान् ।

अनन्तरम् एकलव्यः वामहस्तेन धनुः गृहीत्वा दक्षिणहस्तस्य अवशिष्टानाम् अङ्गुलीनां साहाय्येन बाणप्रयोगस्य अभ्यासं कृतवान् । किन्तु द्रोणाय अङ्गुष्ठस्य दानानन्तरं एकलव्यः पूर्वतनं नैपुण्यं न प्राप्तवान् एव ।

एवंप्रकारेण अर्जुनस्य सन्देहं निवारितवान् द्रोणः अर्जुनेन सह विनोदवार्तालापं कुर्वन् हस्तिनापुरं प्रतिगतवन् ।



पाण्डवैः द्रोणसकाशात् यद्यपि सर्वाः विद्याः अधीताः, तथापि ते सर्वे अपि एकमात्रविद्यायां प्रावीण्यं सम्पादितवन्तः आसन् । युधिष्ठिरः सारथ्ये नैपुण्यं प्राप्तवान् आसीत् । भीम-दुर्योधनाभ्यां गदाविद्यायां नैपुण्यं प्राप्तम् आसीत् । अर्जुनः धनुर्विद्यायां निपुणः सञ्जातः आसीत् । अर्जुनस्य धनुर्विद्यायाम् चातुर्यं , शीघ्रतया शरसन्धानक्रमः, शस्त्रप्रयोगे नैपुण्यं च अनुपमम् आसीत् ।

सर्वेषाम् अपेक्षया अपि अधिकानि युद्धरहस्यानि अश्वत्थामा जानाति स्म । नकुलसहदेवौ शक्तियुद्धे नैपुण्यं सम्पादितवन्तौ आस्ताम् ।

भीमस्य गदायुद्धकौशलम्, अर्जुनस्य धनुर्विद्याप्रावीण्यं च दृष्ट्वा दुर्योधनादयः असूयाम् अनुभवन्ति स्म ।

स्वशिष्याणां बाणप्रयोगकौशलं कथम् अस्ति इति ज्ञातुम् इच्छन् द्रोणः कदाचित् काञ्चित् परीक्षाम् अयोजितवान् । सः गृध्रस्य प्रतिमाम् एकां निर्माय तां प्रतिमां कस्यचित् वृक्षस्य उपरि स्थापितवान् । अनन्तरं स्वशिष्यान् सर्वान् तस्य वृक्षस्य समीपं नीत्वा उक्तवान् - "अस्मिन् वृक्षे कश्चित् पक्षी अस्ति । सूक्ष्मतया यदि भवद्भिः परिशील्यते, तर्हि सः पक्षी भवतां दृष्टिगोचरः भवति । मम आदेशसमनन्तरं भवद्भिः बाणप्रयोगपूर्वकं तस्य पक्षिणः शिरच्छेदः करणीयः" इति ।

तस्यां परीक्षायां प्रथमपर्यायः युधिष्ठिरस्य ।

द्रोणः युधिष्ठिरम् उद्दिश्य - "सम्यक् पश्यतु । पक्षी दृश्यते वा ?" इति पृष्टवान् ।

'आम्' इति उक्तवान् युधिष्ठिरः।

द्रोणः पुनरपि पृष्टवान् – ''अहं, मम अन्ये च शिष्याः अपि दृश्यन्ते वा भवता ?'' इति।

''आम्। भवन्तः सर्वे अपि दृश्यन्ते'' इति उक्तवान् युधिष्ठिरः।

तदा द्रोणः उक्तवान् – ''भवतः अवधानं पक्षिणः उपरि नास्ति। अतः भवान् तस्य पक्षिणः शिरः च्छेत्तुं न शक्नोति। गच्छतु'' इति।

अनन्तरं द्रोणः एवंक्रमेण एव अन्यान् अपि प्रश्नं पृष्टवान्। सर्वे अपि युधिष्ठिरेण यथा उत्तरितम् आसीत्, तथैव उत्तरं दत्तवन्तः।

अन्ते अर्जुनस्य पर्यायः। अर्जुनः वृक्षसमीपं गत्वा पक्षिणं दृष्टवान्। ''सर्वे दृश्यन्ते वा ?'' इति पृष्टवान् द्रोणः।

तदा अर्जुनः उक्तवान् – ''न, पक्षिणं विना अन्ये केऽपि मया न दृश्यन्ते'' इति।

''एवं तर्हि बाणप्रयोगं करोतु'' इति आदिष्टवान् द्रोणः।

अर्जुनः बाणप्रयोगं कृतवान्। अपरक्षणे एव पक्षिणः शिरः च्छिन्नं सत् अधः पतितम्। एतस्मात् अतीव सन्तुष्टः द्रोणः अर्जुनम् अभिनन्दितवान्। अपि च द्रोणः तस्मिन् क्षणे एव मनसि निर्णीतवान् यत् – युद्धे अर्जुनः एव जयं प्राप्स्यति इति।

कदाचित् द्रोणाचार्यः स्वशिष्यैः सह स्नानार्थं यमुनानदीं गतवान्। द्रोणः नद्यां यदा स्नानं कुर्वन् आसीत्, तदा कश्चित् मकरः द्रोणस्य ऊरुं गृहीतवान्। तदा सः बाणप्रयोगेण मकरस्य मारणार्थं स्वशिष्यान् आदिष्टवान्। अनुक्षणं सर्वे अपि बाणप्रयोगं कृतवन्तः। किन्तु तैः प्रयुक्ताः बाणाः



मकरस्पर्शम् अपि न कृतवन्तः । यतः तैः गुरोः बाणाघातः भवेत् इति भीत्या एव बाणाः प्रयुक्ताः आसन् । किन्तु अर्जुनः द्रोणस्य शरीरस्य आघातः यथा न भवेत्, तथा मकरं लक्ष्यीकृत्य पञ्च बाणान् प्रयुक्तवान् । तेन मकरः मृतः अभवत् ।

एतस्मात् अतीव सन्तुष्टः द्रोणाचार्यः अर्जुनम् उक्तवान् - ''वत्स ! अर्जुन ! भवान् धनुर्विद्यायाम् अत्यन्तं निपुणः अस्ति इति स्पष्टम् अभवत् । भवन्तं ब्रह्मशिरोनामकास्त्रं समन्त्रम् उपदिशामि अहम् । किन्तु सः मन्त्रः असामान्यान् उद्दिश्य एव प्रयोक्तव्यः, न तु सामान्यान् उद्दिश्य । सः मन्त्रः सामान्यान् उद्दिश्य प्रयुक्तः चेत् समस्तलोकः एव भस्मसात् भविष्यति'' इति ।

अपरक्षणे एव स्नात्वा आगतम् अर्जुनं द्रोणः ब्रह्मशिरोनामकास्त्रम् उपदिष्टवान् ।

कदाचित् द्रोणाचार्यः धृतराष्ट्रस्य आस्थानं गतवान् । तत्र व्यासः, भीष्मः, विदुरः, कृपः, बाह्लीकः, सोमदत्तः इत्यादयः ज्येष्ठाः उपविष्टाः आसन् ।

तदा द्रोणः धृतराष्ट्रम् उक्तवान् - ''महाराज ! भवतः पुत्राः सर्वे अपि मत्सकाशात् धनुर्विद्यायाः अभ्यासं कृतवन्तः सन्ति । इदानीं भवान् तेषां प्रावीण्यं परीक्षितुम् अर्हति'' इति ।

द्रोणस्य वचनात् अतीव सन्तुष्टः धृतराष्ट्रः उक्तवान् - ''विद्यादानपूर्वकं भवान् अस्मत्पुत्रान्, अस्मान् च बहुधा उपकृतवान् अस्ति । पुत्रैः अधीतायाः विद्यायाः प्रदर्शनं कदा कुत्र च कारणीयम् इति कृपया भवान् एव चिन्तयतु । तदर्थं सर्वविधव्यवस्थाः अहं





कल्पयिष्यामि'' इति।

एतस्य कार्यक्रमस्य व्यवस्था विदुरेन निरूढा। कार्यक्रमः वैभवेन करणीयः इति मत्वा तेन तदर्थं महती सिद्धता कृता। शस्त्रविद्याप्रदर्शनार्थं योग्यं विशालं प्रदेशं स्वच्छीकृत्य, तत्र प्रेक्षकाणाम् उपवेशनार्थं व्यवस्था कृता। अङ्गणं परितः तात्कालिकी भित्तिः निर्मिता। अङ्गणस्य उत्तरभागे प्रवेशद्वारं निर्मितम्।

कस्मिंश्चित् शुभदिने प्रदर्शनकार्यक्रमः निश्चितः अभवत्। कार्यक्रमार्थं बहवः आगतवन्तः। गान्धारी कुन्ती इत्यादयः अन्तःपुरस्त्रियः शिबिकया आगतवत्यः। सर्वे अपि प्रेक्षकाः स्वस्वस्थाने उपविष्टवन्तः। अनन्तरं द्रोणः अश्वत्थामानम् आनीय वेदिकायाः मध्यभागे स्थापितवान्। द्रोणस्य शिष्याः सर्वे कवचं धृत्वा धनुर्बाणादिकं च स्वीकृत्य महता उत्साहेन वेदिकाम् आरूढवन्तः। युधिष्ठिरः अग्रेसरः आसीत्। अन्ये तम् अनुसृतवन्तः।

सर्वे अपि रथस्य उपरि, गजस्य उपरि, अश्वस्य उपरि उपविश्य बहुप्रकारैः स्वशस्त्र-नैपुण्यं दर्शितवन्तः। धनुर्विद्यायाम् अपि स्वकीयं सामर्थ्यं दर्शितवन्तः। 'तैः प्रयुक्ताः बाणाः अस्माकं शरीरस्य आघातं कुर्युः वा' इति भीताः प्रेक्षकाः।

वेदिकायां प्रवर्तमानस्य कार्यक्रमस्य विवरणं धृतराष्ट्रं विदुरः वदति स्म। कुन्ती गान्धारीं वदति स्म।

किञ्चित्कालानन्तरं भीमदुर्योधनौ गदायुद्धम् आरब्धवन्तौ। यद्यपि तत् युद्धं प्रदर्शनार्थं केवलम् आयोजितम् आसीत्, तथापि प्रेक्षकेषु केचन भीमम् उत्तेजयन्ति स्म, अपरे केचन दुर्योधनम् उत्तेजयन्ति स्म। तावता द्रोणः गदायुद्धस्य स्थगनार्थं अश्वत्थामद्वारा सूचनां दत्तवान्।

अनन्तरम् अर्जुनः वेदिकाम् आरूढवान्। अर्जुनस्य दर्शनात् प्रेक्षकाः हर्षोद्गारं कृतवन्तः। एतत् श्रुत्वा धृतराष्ट्रः विदुरं पृष्टवान् - 'कः कोलाहलः सः?' इति।

विदुरः तस्य विवरणं धृतराष्ट्रम् उक्तवान्।

अर्जुनेन प्रदर्शिताः कार्यक्रमाः अद्भुताः आसन्। सः दिव्यास्त्रम् उपयुज्य वायुम्, अग्निं, मेघान् च सृष्टवान्। विशिष्टस्य अस्त्रस्य

साहाय्येन अदृश्यतां गतवान्, क्षणकालानन्तरं दृश्यत्वं प्राप्तवान् च । तस्य लक्ष्यसिद्धिः अपूर्वा आसीत् । वृत्ताकारं परिभ्रमन्त्याः कस्याश्चित् सूकरप्रतिमायाः मुखम् एव लक्ष्यीकृत्य अर्जुनः युगपत् एव पञ्च बाणान् प्रयुक्तवान् । अनन्तरं पुनरपि एकविंशतिं बाणान् गोशृङ्गं प्रवेशितवान् ।

सर्वे अपि आत्मना अधीतायाः विद्यायाः प्रदर्शनं कृत्वा वेदिकातः निष्क्रान्ताः । तदा सहजकवचकुण्डलाभ्यां बालसूर्यः इव प्रकाशमानः कर्णः धनुर्बाणादिकं धृत्वा वेदिकाम् आगतवान् । सः द्रोणाचार्यं कृपाचार्यं च नमस्कृत्य अर्जुनम् उद्दिश्य धीरवाण्या उक्तवान् - "रे अर्जुन ! 'धनुर्विद्यायाम् अहम् एव श्रेष्ठः' इति भावयन् भवान् गर्वं मा अनुभवतु । भवता प्रदर्शिताः सर्वाः विद्याः मया अपि प्रदर्श्यन्ते" इति ।

कर्णस्य एतस्मात् वचनात् अर्जुनः कुपितः अपमानितः च । प्रेक्षकेषु कुतूहलम् उत्पन्नम् । कर्णः स्ववचनानुसारम् अर्जुनेन प्रदर्शिताः सर्वाः विद्याः अपि प्रदर्शितवान् । एतस्मात् अतीव सन्तुष्टाः दुर्योधनः, तस्य भ्रातरः च प्रीत्या कर्णम् आलिङ्ग्य उक्तवन्तः - "अद्य आरभ्य भवान् अस्माकम् आप्तः सन् अस्मासु अन्यतमत्वेन तिष्ठतु । अस्माकं शत्रूणां संहारपूर्वकम् अस्मान् उपकरोतु" इति ।

कर्णः दुर्योधनादीनाम् एतत् वचनम् अङ्गीकृतवान् । अनन्तरं सः अर्जुनेन सह द्वन्द्वयुद्धं कर्तुम् इच्छन् तदर्थं द्रोणाचार्यस्य अनुमतिं पृष्टवान् । एतत् ज्ञात्वा अर्जुनः तत्क्षणे एव युद्धार्थं सन्नद्धः अभवत् । स्वपुत्रौ परस्परं युद्धार्थं सन्नद्धौ इति ज्ञात्वा कुन्ती मूर्च्छां गता । परिचारिकाः मूर्च्छां गतायाः कुन्त्याः शुश्रूषां कृतवत्यः ।

तदा कृपः कर्णं पृष्टवान् - "वत्स ! भवान् कुतः आगतवान् ? भवतः वंशः कः ? भवतः मातापितरौ कौ ? यदि भवान् क्षत्रियः न, तर्हि भवता सह अर्जुनेन द्वन्द्वयुद्धं न करणीयम्" इति ।

एतस्य प्रश्नस्य उत्तरं दातुम् अशक्तः कर्णः अतीव लज्जितः अभवत् ।





# मञ्जुनाथस्य सौजन्यम्

कोदण्डपुरनामके ग्रामे रामनाथनामकः कश्चित् कृषिकः आसीत् । सः महान् धनिकः आसीत् । अतः तद्ग्रामीणाः सर्वे अपि रामनाथं गौरवेण पश्यन्ति स्म । किन्तु रामनाथः सर्वैः सह महता दर्पेण व्यवहरति स्म । तत्रापि तदीये क्षेत्रे ये कर्मकराः कार्यं कुर्वन्ति स्म, तैः सह अत्यन्तं कठोरं व्यवहरति स्म ।

रामनाथस्य त्रयः पुत्राः । ज्येष्ठौ उभौ पुत्रौ अपि पितुः स्वभावम् एव अनुसरन्तौ तस्य विधेयौ आस्ताम् । किन्तु तृतीयस्य पुत्रस्य मञ्जुनाथस्य स्वभावः भिन्नः एव आसीत् ।

मञ्जुनाथः सर्वदा पितरं, सहोदरौ च उद्दिश्य वदति स्म – "जीवननिर्वहणार्थम् एव ये कर्मकराः अस्माकं सकाशे कार्यं कुर्वन्ति, तैः सह अस्माभिः स्नेहेन व्यवहरणीयम् । तदा ते अपि अस्माकं शुभम् एव कामयन्ते । सर्वैः सह आदरभावः यदि स्यात् अस्माकं, तर्हि सः आदरमनोभावः एव कष्टकाले अपि अस्मान् बहुधा उपकरोति" इति ।

एतत् श्रुत्वा तस्य सहोदरौ पिता च वदन्ति स्म – "कर्मकरैः सह व्यवहारः यावत् आवश्यकं तावदेव भवेत् । तेषु अतीव आत्मीयता कदापि न प्रदर्शनीया" इति ।

गोपीनाथनामकः कश्चित् बहोः कालात् रामनाथस्य क्षेत्रे दासत्वेन कार्यं करोति स्म । कदाचित् गोपीनाथस्य दूरबन्धुः कश्चित् मृतः इत्यतः गोपीनाथः शिवपुर-ग्रामस्थायाः एक-एकर्परिमितायाः भूमेः उत्तराधिकारी जातः । गोपीनाथः एतं विषयं रामनाथं निवेद्य उक्तवान् – "स्वामिन् ! एतावन्ति दिनानि भवतः आश्रये जीवनं यापितवान् अहम् । तदर्थम् अहं धन्यः अस्मि । इदानीं भवान् अनुमतिं ददाति चेत् अहं शिवपुरग्रामं गमिष्यामि" इति ।

एतत् श्रुत्वा रामनाथः असूयापूर्वकं



गोपीनाथं पश्यन् उक्तवान् - ''सकृत् दास्यम् अङ्गीकृतं चेत् प्रथमैकादशीपर्यन्तम् अपि कार्यं करणीयम् इति आवाभ्यां सन्धिः कृतः अस्ति। प्रथमैकादशीपर्यन्तं, तन्नाम इतोऽपि मासद्वयं यावत् भवता कार्यं करणीयम्। नो चेत् मया इतःपूर्वं वेतनरूपेण दत्तं धान्यं प्रत्यर्पयतु भवान्'' इति।

रामनाथस्य एतत् वचनं श्रुत्वा किमपि कर्तुम् अशक्तः गोपीनाथः पुनरपि मासद्वयं यावत् कोदण्डपुरे एव स्थित्वा कार्यं कृतवान्। अनन्तरं प्रथमैकादश्यां दासत्वात् मुक्तिं प्राप्य, पत्नीपुत्रैः सह शिवपुरग्रामं गत्वा तत्र स्वक्षेत्रे कृषिकार्यम् आरब्धवान्।

गोपीनाथः पूर्वं दासत्वेन रामनाथसमीपे कार्यं कुर्वन् आसीत् इति कारणतः तेन किञ्चिदपि धनं न सङ्गृहीतम् आसीत्। अतः शिवपुरग्रामं गतवता गोपीनाथेन कृषिकार्यार्थं गृहव्ययार्थं च महता प्रमाणेन ऋणं करणीयम् आपतितम्। एतं विषयं ज्ञात्वा गोपीनाथस्य प्रतिवेशी कृषिकः गोपीनाथम् उक्तवान् - ''गोपीनाथ! भवतः इदानीं धनस्य आवश्यकता महती अस्ति खलु! अतः भवतः भूमेः अर्धभागं कृषिकार्यार्थं मह्यं ददातु। अवशिष्टे अर्धे भवान् कृषिकार्यं करोतु। मया कृतेन कृषिकार्येण यः आयः प्राप्यते, तस्मिन् अर्धं भवते दास्यामि अहम्। मया दीयमानेन धनेन भवान् विनाक्लेशं कृषिकार्यं कर्तुं शक्नोति। तेन उभयोः अपि लाभः'' इति।

प्रतिवेशिकृषिकस्य एतत् वचनं गोपीनाथः अङ्गीकृतवान्। अनन्तरकाले गोपीनाथः स्वकृषिकार्ये प्रगतिं प्राप्य विना दारिद्र्यं सुखेन जीवनं यापयति स्म।

कदाचित् गोपीनाथः पुत्र्याः विवाहं निश्चित्य विवाहार्थं सर्वसिद्धतां कृतवान्। सः कोदण्डपुरं गत्वा रामनाथं विवाहार्थम् आहूतवान्। विवाहवार्तां श्रुत्वा अपि रामनाथः, तस्य उभौ ज्येष्ठौ पुत्रौ च गोपीनाथं सादरं न दृष्टवन्तः, अपि तु उपेक्षाम् एव प्रदर्शितवन्तः। किन्तु रामनाथस्य तृतीयः पुत्रः मञ्जुनाथः गोपीनाथेन रहस्ये मिलित्वा उक्तवान् - ''भवान् बहूनि वर्षाणि यावत् अस्माकं क्षेत्रे कार्यं कृतवान्, विश्वासपात्रम् आसीत् च। किन्तु इदानीं पितुः अधीनः अहं सर्वथा

असहायः अस्मि । तथापि भवतः पुत्र्याः विवाहार्थम् अवश्यम् आगमिष्यामि अहम्'' इति ।

मञ्जुनाथः गोपीनाथस्य पुत्र्याः विवाहार्थं गमिष्यति इति वार्तां श्रुत्वा तस्य पिता सहोदरौ च तस्य उपहासं कृतवन्तः । तथापि मञ्जुनाथः विवाहार्थं शिवपुरग्रामं गतवान् । विवाहसमये एव, गोपीनाथस्य प्रतिवेशी कृषिकः दिवङ्गतः । वस्तुतः तेन कृषिकेण वरदक्षिणाधनं गोपीनाथाय दातव्यम् आसीत् । किन्तु प्रतिवेशिमरणात् दुःखितान् तद्गृहसदस्यान् धनं प्रष्टुं न इष्टवान् गोपीनाथः । किन्तु वरपक्षीयाः साग्रहम् उक्तवन्तः यत् - विवाहमण्डपे एव वरदक्षिणा दातव्या इति ।

तदा गोपीनाथः सविनयं मञ्जुनाथं प्रार्थितवान् - ''इदानीन्तनी मम परिस्थितिः भवता ज्ञाता एव अस्ति । अतः भवान् कृपया कोदण्डपुरस्य भूस्वामिनः पुत्रः इति आत्मानं परिचाययन् वरपक्षीयान् अङ्गीकारयतु'' इति ।

मञ्जुनाथः वरस्य पितरं परिस्थितिं निवेदितवान् । किन्तु वरस्य पिता मञ्जुनाथस्य वचनं न अङ्गीकृतवान् । अपि तु सः मञ्जुनाथम् उक्तवान् - ''सः मृतः प्रतिवेशी कृषिकः मरणात्पूर्वम् एव एतस्मै गोपीनाथाय धनं दत्तवान् स्यात् खलु ! एषः एव वञ्चनां कुर्वन् स्यादपि । अतः भवान् एव गोपीनाथं बोधयतु - 'अर्ध-एकर्परिमिता भूमिः वराय दातव्या । नो चेत् एषः विवाहः न भविष्यति' इति'' इति ।

वराय भूमिं दातुं गोपीनाथः सिद्धः





जातः। किन्तु तस्य पुत्री सुभाषिणी एतत् न अङ्गीकृतवती । अपि तु सा कोपेन उक्तवती - "एते दुराशापराः। अतः अहम् एतं सम्बन्धं न इच्छामि" इति।

सुभाषिण्याः एतत् वचनं श्रुत्वा वरपक्षीयाः कुपिताः । "स्त्रीणाम् एतावान् अहम्भावः न भवेत् । वरदक्षिणां विना यः परिणेतुम् इच्छति, तम् एव परिणयतु भवती" इति वदन्तः वरपक्षीयाः कोपात् ततः निर्गताः।

एतस्मात् गोपीनाथः अतीव खिन्नः। तदा मञ्जुनाथः गोपीनाथसमीपम् आगत्य उक्तवान् - "भवतः पुत्रीं सुभाषिणीं बाल्यात् अपि अहम् इच्छामि स्म। तस्याः स्वाभिमानः मह्यम् अतीव अरोचत । यदि भवतः अनुमतिः अस्ति, तर्हि अहम् अस्मिन् एव मुहूर्ते भवतः पुत्रीं परिणेष्यामि। अनन्तरं च सर्वविधानि अपि कष्टानि सोढुम् अहं सिद्धः अस्मि" इति।

मञ्जुनाथस्य पिता धनिकः इति कारणतः गोपीनाथः मञ्जुनाथस्य वचनं न अङ्गीकृतवान् । किन्तु मञ्जुनाथः पुनरपि गोपीनाथम् उक्तवान् - "भवतः पुत्र्याः विवाहः विवाहमण्डपे एव स्थगितः इति कारणतः इतःपरं सुभाषिणीं परिणेतुं कोऽपि अग्रे न आगच्छेत् । मम गृहस्य सदस्याः कथमपि यथा अङ्गीकुर्युः तथा अहं करिष्यामि । भवान् कृपया एतं विवाहम् अङ्गीकरोतु" इति।

गोपीनाथस्य अङ्गीकारपूर्वकं, पूर्वनिश्चिते मुहूर्ते एव मञ्जुनाथ-सुभाषिण्योः विवाहः सम्पन्नः।

अनन्तरं मञ्जुनाथः पत्न्या सह स्वगृहं गतवान् । विषयं ज्ञात्वा मञ्जुनाथस्य पिता सहोदरौ च महान्तं कलहं कृतवन्तः।

अनन्तरदिने रामनाथः बहु विचिन्त्य पुत्रं मञ्जुनाथम् उक्तवान् - "भवतः कारणतः अपमानितः अहं ग्रामे कस्मैचित् अपि मुखं दर्शयितुं लज्जाम् अनुभवामि । भवान् मम पुत्रः इत्यतः भवते किञ्चित् धनं दास्यामि। धनं स्वीकृत्य गृहात् निर्गच्छतु भवान्" इति।

पित्रा दत्तं धनं स्वीकृत्य मञ्जुनाथः पत्न्या सह शिवपुरग्रामं गतवान् । तत्र कस्माच्चित् किञ्चित् भूमिं भाटकरूपेण स्वीकृत्य पित्रा

दत्तं धनं मूलधनरूपेण नियुज्य कृषिकार्यम् आरब्धवान् । कृषिकार्ये उत्तमं लाभं प्राप्य पञ्चषेषु वर्षेषु एव स्वभूमिं क्रीतवान् सः । यथाशक्ति तद्ग्रामीणानां साहाय्यं कुर्वन् 'परोपकारी' इति ख्यातः अभवत् मञ्जुनाथः।

एवं स्थिते कदाचित् वृष्टिसमये चण्डमारुतकारणात् समुद्रः उद्गतः । तदा बहवः ग्रामाः कृषिभूमयः च समुद्रजलेन आवृताः अभवन् । कोदण्डपुरस्य क्षेत्राणि अपि जलावृतानि अभवन् । एतस्मात् कोदण्डपुरस्थाः सर्वेऽपि सकुटुम्बं प्रदेशान्तरं गतवन्तः।

एतं विषयं ज्ञात्वा मञ्जुनाथः, शिवपुरग्रामस्थाः च निराश्रितेभ्यः स्वग्रामे आश्रयं यच्छन्तः यथाशक्ति तेषां साहाय्यं कृतवन्तः। तेषु दिनेषु मञ्जुनाथः ज्ञातवान् यत् - पिता सहोदरौ चापि ग्रामं त्यक्त्वा कुत्रापि गताः सन्ति इति । अनुक्षणं सः गोपीनाथेन पत्न्या च सह प्रस्थितवान्।

मञ्जुनाथादिभिः किञ्चिद्दूरं यदा गतं, तदा भीत्या परितः अवलोकमानाः आगच्छन्तः रामनाथः तस्य सहोदरौ च दृष्टाः। रामनाथः पुत्रं स्नुषां च दृष्ट्वा दुःखेन रोदनम् आरब्धवान्।

तदा मञ्जुनाथः पितुः हस्तौ गृहीत्वा उक्तवान् - "इदानीं दुःखकरणेन किमपि प्रयोजनं नास्ति । धनिकता दारिद्र्यं च जीवनस्य मुखद्वयम्। लवणजलेन आवृतानि अस्माकं क्षेत्राणि सद्यःकाले तु उपयोक्तुं न शक्यानि। पञ्चषाणां वर्षाणाम् अनन्तरं तेषां क्षेत्राणाम् उपयोगः शक्येत। तावत्पर्यन्तं वयं सर्वे मिलित्वा अत्रैव मम भूमौ कृषिकार्यं करवाम। अस्मासु तु स्वामी कर्मकरः इति भेदः नास्ति । अत्र सर्वे अपि समानाः" इति।

"आवयोः आशयः अपि सः एव" इति वदन्तौ मञ्जुनाथस्य पत्नी गोपीनाथः च रामनाथं नमस्कृतवन्तौ।

मञ्जुनाथस्य सौजन्यं दृष्ट्वा रामनाथः तस्य पुत्रौ च अतीव सन्तुष्टौ। तस्मिन् क्षणे एव तेषु स्थिताः नीचभावनाः अपगताः अभवन्।







# दुराशा

कस्मिंश्चित् ग्रामे दरिद्रः कश्चित् आसीत् । ग्रामं परितः ये ग्रामाः सन्ति, तान् ग्रामान् गत्वा भिक्षां कुर्वन् सः जीवनं यापयति स्म । ग्रामेषु ये कृषिकाः धान्यं वर्धयन्ति, ते आत्मना सम्पादिते धान्यसङ्ग्रहे एव भिक्षुकाय अपि किञ्चित् यच्छन्ति स्म । किन्तु अनन्तरं किमपि न प्राप्यते स्म भिक्षुकेण ।

कदाचित् सः भिक्षुकः दिनद्वयं यावत् आहारम् एव न प्राप्तवान् । तथापि कुतश्चित् आहारः प्राप्येत इति आशया एकस्मात् ग्रामात् अपरं ग्रामं गच्छति स्म । तदा मध्येमार्गं कश्चित् वृद्धः मिलितवान् । सः वृद्धः तं भिक्षुकं दृष्ट्वा - ''भवान् अतीव बुभुक्षितः अस्ति इति भाति, अतः एतत् स्वीकरोतु'' इति वदन् भिक्षुकाय एकं चणकधान्यं दत्तवान् । एतस्मात् असन्तृप्तः भिक्षुकः वृद्धं पृष्टवान् - ''एतेन एकेन चणकधान्येन उदरं पूर्यते वा ?'' इति ।

तदा वृद्धः भिक्षुकम् उद्दिश्य - ''एतस्य खादनेन न किमपि प्रयोजनं स्यात् भवतः । किन्तु एतत् धान्यं भवतः समीपे अस्ति चेत्, भवतः जीवननिर्वहणं न क्लेशाय'' इति उक्त्वा ततः गतवान् ।

ततः अग्रे गतः भिक्षुकः सूर्यास्तसमये समीपस्थं ग्रामं प्राप्य, कस्यचित् गृहस्य पुरतः स्थित्वा - ''अम्ब ! किञ्चित् अन्नं ददातु'' इति उक्तवान् ।

एतत् श्रुत्वा तद्गृहस्य स्वामिनी गृहात् बहिः आगतवती । सा भिक्षुकं स्वगृहस्य अन्तः नीत्वा तस्मै भोजनं दत्तवती । भोजनानन्तरं भिक्षुकम् उक्तवती - ''इदानीं रात्रिः खलु । तत्रापि महान् अन्धकारः । अतः अद्य रात्रौ अत्रैव शयनं कर्तुं शक्नोति भवान्'' इति ।

भिक्षुकः एतत् अङ्गीकृतवान् ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

प्रातः सूर्योदयसमये एव तद्गृहस्य कुक्कुटः कश्चित् भिक्षुकेन यत्र शयितम् आसीत्, तत्र आगतवान् । कुक्कुटस्य आगमनशब्दात् भिक्षुकस्य जागरणम् अभवत् । तावता एव सः कुक्कुटः भिक्षुकस्य चणकधान्यं चञ्च्वा गृहीत्वा क्षणाभ्यन्तरे गीर्णवान् ।

एतत् दृष्ट्वा भिक्षुकः - "हन्त ! मम चणकधान्यं कुक्कुटेन गीर्णम्" इति वदन् रोदनम् आरब्धवान् ।

भिक्षुकस्य रोदनं श्रुत्वा तद्गृहस्य स्वामिनी भिक्षुकसमीपम् आगतवती । प्रवृत्तं सर्वं ज्ञात्वा सा भिक्षुकम् उक्तवती - "केवलस्य एकस्य चणकधान्यस्य निमित्तं किमर्थम् एतावत् दुःखम् अनुभवति भवान् ? अहम् किलो-परिमितं चणकधान्यं ददामि" इति ।

तदा भिक्षुकः उक्तवान् - "किलो-परिमितं चणकधान्यं न आवश्यकं मम । मम समीपे यत् धान्यम् आसीत्, तत् अपूर्वं आसीत्" इति ।

एतत् श्रुत्वा गृहस्वामिनी भिक्षुकम् उद्दिश्य - "तर्हि इदानीम् अहं किं करोमि ? यतः भवदीयं चणकधान्यं कुक्कुटस्य उदरे अस्ति । यदि भवान् इच्छति, तर्हि एतं कुक्कुटम् एव नयतु" इति उक्तवती ।

नगरे कुक्कुटस्य विक्रयणेन कानिचन रूप्यकाणि वा प्राप्यन्ते इति आशया सः भिक्षुकः गृहस्वामिन्या दत्तं कुक्कुटं स्वीकृत्य तस्मात् ग्रामात् प्रस्थितवान् । मध्येमार्गं यः ग्रामः लब्धः, तत्र भिक्षुकः कञ्चित् प्रार्थितवान् यत् - अद्य रात्रिभोजनं भवतः



गृहे कर्तुं शक्नोमि वा अहम् ? इति । सः सन्तोषेण भिक्षुकस्य वचनम् अङ्गीकृतवान् ।

तस्यां रात्रौ भिक्षुकः भोजनं समाप्य सुखेन निद्रां कृतवान् । यदा भिक्षुकः निद्रां प्राप्तवान्, तदा भिक्षुकस्य कुक्कुटः गोष्ठं गत्वा तद्गृहस्य कुक्कुटैः सह कलहम् आरब्धवान् । एतस्मात् कुपिताः तद्गृहस्य कुक्कुटाः भिक्षुकस्य कुक्कुटं सम्यक् ताडितवन्तः । एतस्मात् कथञ्चित् आत्मानं रक्षितुम् इच्छन् भिक्षुकस्य कुक्कुटः ततः धावितवान् । तावता गोष्ठे स्थितस्य कस्यचित् गोवत्सस्य पादयोः अधः पतित्वा सः मृतः अभवत् ।

कुक्कुटानां कोलाहलात् जागरणं प्राप्य भिक्षुकः गोष्ठं गतवान् । प्रवृत्तं सर्वं ज्ञात्वा - "हाँ, मम कुक्कुटः, मम सुवर्णकुक्कुटः" इति



उच्चैः क्रन्दनं कृतवान् ।

एतं कोलाहलं श्रुत्वा तद्गृहस्य स्वामी – 'अहं कुक्कुटद्वयं ददामि । स्वीकृत्य गच्छतु' इति उक्तवान् । किन्तु भिक्षुकः एतत् न अङ्गीकृतवान् । अपि तु सः उक्तवान् – "यस्य वत्सस्य पादाघातेन मम कुक्कुटः मृतः तं वत्सम् एव मह्यं ददातु" इति । गृहस्वामी वत्सं भिक्षुकाय दत्तवान् ।

अनन्तरदिने प्रातः भिक्षुकः गोवत्सं रज्ज्वा बद्ध्वा ततः नगरं प्रति प्रस्थितः । नगरस्य प्राप्तिसमये एव सूर्यः अस्तं गतः । अन्धकारः प्रसृतः । अतः सः समीपे विद्यमानं किञ्चन गृहं गत्वा तद्गृहस्वामिनम् उद्दिश्य – "भोः ! अहं सुदूरात् आगतवान् अस्मि । अत्र मम परिचितः कोऽपि नास्ति । अतः अद्य रात्रौ भवतः गृहे स्थातुम् अवकाशः प्राप्येत वा मया ?" इति पृष्टवान् ।

गृहस्वामी अवकाशदानम् अङ्गीकृतवान् ।

तस्मिन् दिने तद्गृहे कोऽपि विशेषकार्यक्रमः आसीत् । तस्मात् बहवः बान्धवाः आसन् तस्मिन् गृहे । भिक्षुकः तत्र आकण्ठं भूरिभोजनं कृतवान् । तस्यां रात्रौ भिक्षुकस्य गोवत्सः रज्जुं बलात् आकृष्य तद्गृहस्य अश्वसमीपं गत्वा तदीयम् आहारं तृणं खादितुम् आरब्धवान् । तदा अश्वः स्वपृष्ठभागस्थेन पादेन बलात् वत्सं ताडितवान् । एतस्मात् ताडनात् वत्सः महतीं वेदनाम् अनुभवन् प्राणान् त्यक्तवान् ।

अनन्तरदिने भिक्षुकः गृहस्वामिनं प्रवृत्तं सर्वं निवेद्य स्वसमस्यां तं निवेदितवान् । तद्गृहस्वामी अतीव सज्जनः । गृहं प्रति आगतानां बान्धवानां पुरतः अपरिचितेन केनचित् सह चर्चाकरणम् अनिच्छन् सः भिक्षुकाय स्वकीयम् अश्वं दत्तवान् ।

भिक्षुकः गृहस्वामिना दत्तम् अश्वम् आरुह्य ततः दूरस्थं नगरं प्रति प्रस्थितवान् ।

तस्मिन् दिने सायङ्कालसमये भिक्षुकः नगरं प्राप्तवान् । नगरस्य वीथ्यां गच्छन् सः, काञ्चित् धर्मशालां दृष्टवान् । धर्मशालायाः पुरतः काचित् सुन्दरी युवतिः आसीत् । तां युवतिं दृष्ट्वा भिक्षुकः चिन्तितवान् – 'यदि एषा मम पत्नी स्यात्, तर्हि वरं स्यात्' इति । अतः सः अनुक्षणम् अश्वात् अवतीर्य धर्मशालां प्रविष्टवान् । स्ववासार्थं तत्रत्यस्य व्यवस्थापकस्य अनुमतिं पृष्टवान् ।

धर्मशालायाः व्यवस्थापकः भिक्षुकस्य वासार्थं प्रकोष्ठमेकं दर्शितवान्।



भिक्षुकेन दृष्टा युवतिः धर्मशालायाः व्यवस्थापकस्य पुत्री आसीत्। सा पितुः एकमात्रपुत्री आसीत्। अतः भिक्षुकः चिन्तितवान् - 'यदि एताम् अहं परिणेष्यामि, तर्हि अहम् अपि अस्याम् एव धर्मशालायां वसन् पत्न्या सह सुखेन जीवितुं शक्नोमि' इति।

अनन्तरं भिक्षुकः धर्मशालायाः व्यवस्थापकम् उक्तवान् - "मदीयः अश्वः जात्या अतीव उत्तमः अस्ति। अतः तस्मै जलपानम् आहारदानं च श्रद्धया करोतु भवान्" इति।

भिक्षुकस्य वचनम् अङ्गीकृत्य व्यवस्थापकः अश्वं जलं पाययितुं जलागारसमीपं नीतवान्। किन्तु अश्वः तत्र जलं पीत्वा क्षणाभ्यन्तरे ततः पलायितवान्। व्यवस्थापकः प्रवृत्तं विषयं भिक्षुकं निवेदितवान्। एतत् श्रुत्वा कुपितः भिक्षुकः उच्चस्वरेण उक्तवान् - "मया पूर्वमेव उक्तम् आसीत् खलु - सः उत्तमः अश्वः इति, जागरूकतया तस्य योगक्षेमं द्रष्टव्यम् इति च। इदानीम् एव मम अश्वम् आनीय प्रत्यर्पयतु। यतः श्वः प्रभाते एव राजकार्यनिमित्तं मया गन्तव्यम् अस्ति" इति।

तदा व्यवस्थापकः - "प्रातःकालः भवतु। परिश्रमेण वा अहं भवदीयम् अश्वम् अन्विष्य आनेष्यामि" इति भिक्षुकं प्रार्थितवान्।

किन्तु एतत् श्रुत्वा भिक्षुकः कोपेन उक्तवान् - "यदि भवतः पुत्री एव न दृश्यते, तर्हि भवान् तस्याः अन्वेषणार्थं प्रातःकालपर्यन्तं प्रतीक्षां कुर्यात् वा ? न खलु !" इति।

"एवं तर्हि इदानीं मया किं करणीयम् इति चिन्तयति भवान् ?" इति कोपेन पृष्टवान् धर्मशालायाः व्यवस्थापकः।

तदा भिक्षुकः उक्तवान् - "मम अश्वस्य विनिमयत्वेन भवतः पुत्रीम् एव ददातु" इति।

एतत् श्रुत्वा व्यवस्थापकः अतीव कुपितः। उभयोः अपि कलहः आरब्धः। तावता व्यवस्थापकस्य पत्नी आगत्य पतिम्

उक्तवती - ''दोषः भवतः एव। अतः भवान् मौनं तिष्ठतु। यदि आवयोः पुत्री एतस्य परिणयम् अङ्गीकरोति, तर्हि विवाहं कुर्मः। क्षणकालं मौनं तिष्ठतां भवन्तौ। तावता अहं विवाहविषये पुत्र्याः अभिप्रायं पृष्ट्वा आगमिष्यामि'' इति।

व्यवस्थापकस्य पत्न्याः एतत् वचनं श्रुत्वा भिक्षुकः चिन्तितवान् यत् - कार्यसिद्धिः जाता एव इति।

अनन्तरं व्यवस्थापकस्य पत्नी गृहस्य अन्तः गतवती। क्षणाभ्यन्तरे एव बहिः आगत्य सा भिक्षुकम् उक्तवती - ''मम पुत्री भवन्तं परिणेतुं सर्वथा न इच्छति। अतः अहं तां गोण्यां बद्ध्वा स्थापितवती अस्मि। भवान् तां गोणीं स्वीकृत्य इदानीम् एव इतः निर्गच्छतु। अनन्तरं भवान् उपायेन विवाहार्थं ताम् अङ्गीकारयितुं शक्नोति'' इति।

धर्मशालायाः व्यवस्थापकस्य पुत्री एतं विवाहं न अङ्गीकुर्यात् इति न ऊहितम् आसीत् भिक्षुकेण। सा एतं विवाहं न अङ्गीकरोति इति कारणतः व्यवस्थापकस्य पत्न्या उक्तः उपायः भिक्षुकाय अरोचत। अपि च सः चिन्तितवान् - 'एतां नीत्वा परिणीय, पुनरपि एताम् एव धर्मशालाम् आगत्य अत्रैव वासं करिष्यामि' इति।

अनन्तरं सः व्यवस्थापकस्य पत्न्या दत्तां गोणीं स्कन्धे आरोप्य तस्यां रात्रौ एव ततः प्रस्थितवान्। यद्यपि गोणी अतीव भारयुता न आसीत्, तथापि गोण्याः अन्तः स्थिता युवतिः इतस्ततः लुण्ठनं कुर्वती आसीत् इति कारणतः महत् कष्टम् अनुभवति स्म भिक्षुकः। तथापि कथञ्चित् तां गोणीं वहन् भिक्षुकः प्रातःकालसमये किञ्चन अरण्यं प्राप्तवान्। तत्र सः गोणीम् अवतार्य कुतूहलेन गोणीम् उद्घाटितवान्। तदा गोणीतः बहिः आगतः कश्चित् शुनकः भिक्षुकस्य नासिकां दष्ट्वा ततः वेगेन पलायितवान्।

'चणकधान्यस्य कारणतः प्राप्ता अपूर्वा शक्तिः नष्टा अभवत्' इति चिन्तयन् शुनकेन दष्टां नासिकां गृहीत्वा महतीं वेदनाम् अनुभवन् भिक्षार्थं पुनरपि ग्रामं प्रति प्रस्थितवान् भिक्षुकः।



# प्रकृतिवैचित्र्याणि

## अपायकारी मत्स्यः

मदरास्नगरस्य मेरीना-तीरस्थां मत्स्य-प्रदर्शनाशालां प्रति कश्चन मत्स्यः आनीतः अस्ति। एषः मत्स्यः पतङ्गपक्षसदृशपक्षवान् अस्ति। पृष्ठभागे बाणसदृशाः शिखाः सन्ति। एतस्य पक्षाः अतीव भयजनकाः सन्ति, येन इतरसमुद्रप्राणिनः एतस्य समीपम् अपि न आगच्छन्ति। 'रस्सल्स् स्कार्पियन् फिश्'नामकस्य एतस्य मत्स्यस्य विषये १९३० तमे वर्षे विमोचिते कस्मिंश्चित् पुस्तके लिखितम् अस्ति - ' एतादृशाः मत्स्याः अतीव विषयुक्ताः भवन्ति, एते पक्षस्थैः कण्टकैः तीव्रं घातयन्ति' इति। अतः तेषु दिनेषु समुद्रसर्पापेक्षया अपि अपायकारी एषः मत्स्यः इति जनाः भीताः भवन्ति स्म। एतादृशः मत्स्यः समुद्रजले केवलं जीवितुं समर्थः। अतः एतस्य रक्षणार्थं पोषणजलागारेषु समुद्रजलम् एव पूरयन्तः सन्ति।



## हरिणसदृशः शुनकः

मदरास्समीपस्थे वण्डलूरुमृगालये कश्चन हरिणशिशुः जन्म प्राप्तवान् अस्ति। एतस्य नयने अतीव सुन्दरे, कान्तियुते च स्तः चेदपि, एतस्य समीपं गच्छामः चेत् एषः शुनकः इव भषति। अतः एव एषः 'भषकः हरिणः' इति आहूयते।



## श्वेतः काकः

श्वेतः काकः कुत्रापि दृष्टः वा भवद्भिः ? न स्यात् खलु ! मदरास्नगरस्य गिण्डिविस्तरणस्थं बालोद्यानं गत्वा दृष्टं चेत् श्वेतः काकः दृष्टिगोचरः भवति। रक्तवर्णीयनेत्रयुतः श्वेतशरीरवान् ९० दिनवयस्कः एषः काकजातीयः एव। किन्तु शारीरकपरिवर्तनकारणतः एषः विशेषः कदाचित् दृश्यते। कोट्टूरुमध्ये कस्मिंश्चित् वृक्षे केचन कृष्णकाकाः एतं श्वेतकाकं पीडयन्ति स्म। एतत् दृष्टवता केनचित् एषः श्वेतः काकः आनीय बालोद्यानस्य अधिकारिणे अर्पितः अस्ति।



# भवान् किमर्थं न आगतवान् ?

| | |
|---|---|
| रमेशः - माधव ! किं कुर्वन् अस्ति भवान् ? | Madhava, what are you doing ? |
| माधवः - आगच्छतु अन्तः । टिप्पर्णीं लिखन् अस्मि । अद्य शिक्षकः उक्तवान् अस्ति - विज्ञानस्य टिप्पर्णीं लिखित्वा आनयन्तु इति । | Come in, I am writing notes. The teacher has asked me to write the Science notes today. |
| र - एवं वा ? अद्य किं किं पाठितम् ? | Is that so ? What were you taught today ? |
| मा - अद्य विज्ञानस्य अष्टमः पाठः पाठितः । अन्यः कोऽपि विषयः न पाठितः । | The eighth lesson in Science. No other subject was taught. |
| र - सर्वे छात्राः आगतवन्तः आसन् वा अद्य ? | Did all the students attend the class today ? |
| मा - सर्वे न आगतवन्तः । पञ्चषाः अनुपस्थिताः । भवान् किमर्थं न आगतवान् ? | Not all of them. About 5 or 6 were absent. How is it you did not come ? |
| र - अद्य प्रातःकाले महती शिरोवेदना आसीत् मम । किञ्चित् ज्वरः अपि आसीत् । अतः विद्यालयं न आगतवान् । | I had severe headache in the morning. I had a little fever too. So, I did not come to school. |
| मा - औषधं स्वीकृतवान् खलु भवान् ? | You took medicine ? |
| र - नैव । अम्बा कषायं कृत्वा दत्तवती । तत् पीतवान् अहम् । | No, I had some herbal extract which mother prepared. |
| मा - इदानीं कथम् अस्ति आरोग्यम् ? | How are you now ? |
| र - ज्वरः अपगतः । किञ्चित् निश्शक्तिः अस्ति । | I have no fever, but am only a little weak. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अक्षः - | Dice | निष्ठीवनम् - | Spitting |
| अवगतवान् - | Understood | पौत्रः - | Grandson (Son's son) |
| उट्टङ्कनयन्त्रम् - | Typewriter | प्रतिमा - | Statue |
| उत्पद्येरन् - | May happen | प्रतिवेशी - | Neighbour |
| उद्गतः - | Swelled | प्रत्यग्रः - | Fresh |
| ऊरुः - | Thigh | बन्दी - | Prisoner |
| कुक्कुटः - | Cock | भषणम् - | Barking |
| कौशेयम् - | Silk | भित्तिः - | Wall |
| क्षान्तवान् - | Forgave | मकरः - | Crocodile |
| गीर्णवान् - | Swallowed | मृगया - | The game of hunting |
| गृध्रः - | Eagle | रज्जुलङ्घनम् - | Skipping |
| गोवत्सः - | Calf | वरण्डः - | Varandah |
| चञ्चूः - | Beak | व्याधः - | Hunter |
| चणकधान्यम् - | Groundnut | व्रणितः - | Was wounded |
| जलागारम् - | Water trough | श्रावितवान् - | Related |
| जल्पनम् - | Gossip | श्वशुरः - | Father-in-law |
| थूत्कारः - | To spit | सकृत् - | Once |
| दास्यम् - | Slavery | सुरा - | Liquor |
| नियुद्धम् - | Karate | सूकरः - | Pig |
| निर्वाचनम् - | Election | स्नुषा - | Daughter-in-law |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां मे - १९९५ मासे प्रकटयिष्यामः ।


Taji Prasad


Taji Prasad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'जनवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **सुखमस्माकं कृषिं कुर्वताम् ।**

द्वितीयचित्रम् - **भ्रान्तिरेतेषां क्रीडां पश्यताम् ।**

प्रेषकः - जितेन्द्रनाथगुरुः, स्टेट् ब्याङ्क् आफ् इण्डिया, पद्मपुरम्, बरगढ, ओडिसा - ७६८ ०३६

---




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---